श्रीगणेशायनमः॥ ॥श्रीगोपीजनवल्लभायनमः॥ ॥नत्वागणेशंसंतुष्ट्यैशंकरेणावितन्यते॥ मुदापुराणविख्यातव्रतोद्यापनकौमुदी १
तत्रतावत्सर्वव्रतोपयोगित्वात्किंचिन्निर्णयादिकंलिख्यते॥ ॥तत्रव्रतलक्षणम्॥ ॥अभियुक्तव्रतसिद्धिविषयः संकल्पविशेषएवव्रतंतत्र
कालमाहहेमाद्रौगार्ग्यः॥ अस्तंगेचगुरौशुक्रेबालेवृद्धेमलिम्लुचे॥उद्यापनमुपारंभंव्रतानांनैवकारयेत्॥१॥ लल्लः नीचस्थेवक्रसंस्थेप्य
तिचरणगतेबालवृद्धास्तगेवा॥नीचस्थोमकरस्थः॥ देवीपुराणे॥सिंहसंस्थंगुरुंशुक्रंसर्वारंभेषुवर्जयेत्॥वसिष्ठः॥सिंहस्थेतुमघासंस्थं-
गुरुंयत्नेनवर्जयेत् सिंहस्थगुरुवर्जनंनर्मदोत्तरभागएव॥अन्यत्रतुसिंहांशकएववर्ज्यः॥मकरस्थगुरावपिसर्वंशुभकार्यंवर्ज्यं॥विशेषमा
हलल्लः॥नर्मदापूर्वभागेतुशोणस्योत्तरदक्षिणे॥गंडक्याःपश्चिमेभागेमकरस्थोनदोषभाक्॥१॥ अगस्त्योदयेपिव्रतानांग्रहणविसर्गौनस्तः॥-
नियतकालानितुभवंत्येव॥अगस्त्योदयकालश्चदिवोदासीये॥उदेतियाम्यांहरिसंक्रमाद्रवेरेकाधिकेविंशतिमेत्यगस्त्यः॥सप्तसप्तमेस्तंवृषसं
क्रमाच्चप्रयातिगर्गादिभिरभ्यभाणि॥व्रतारंभसमाप्तितिथिंविशिनष्टिहेमाद्रौसत्यव्रतः॥उदयस्थातिथिर्याहिनभवेद्दिनमध्यभाक्॥ सखं
डानव्रतानांस्यादारंभश्चसमापनं॥१॥ तद्व्यतिरिक्तायामखंडायांप्रारंभश्चसमापनम्॥ संपूर्णातिथिमाह॥ रविर्यांतिथिंसमुदेतिअ-

१

स्तंयातिच्चसासंपूर्णा॥ तत्तद्दतीक्तकालव्यापिनीग्राह्यावा॥ व्यतीपातादिनिषिद्धयोगभद्रादुष्टवासरादिरहितातिथिःशुभकार्येग्रा-
ह्या॥ ब्रह्मयामले॥ दिनभद्रायदारात्रौरात्रिभद्रायदादिवा॥ नत्याज्याशुभकार्येषुप्राहुरेवंपुरातनाइति॥ ॥अथव्रताधिकारिणः॥ ॥
स्कांदे॥ निजवर्णाश्रमाचारनिरतःशुद्धमानसः॥ अलुब्धःसत्यवादीच्चसर्वभूतहितेरतः॥ श्रद्धावान्पापभीरुश्चमददंभविवर्जितः॥अ
वेदनिंदकोधीमानधिकारीव्रतादिषु॥ निजवर्णाश्रमाचारइत्यनेनच्चतुर्णांवर्णानामधिकारोऽवगम्यते॥ अत्रस्त्रीणामपिअधिकारः॥ भा
रते॥ मांहिपार्थव्यपाश्रित्ययेऽपिस्युःपापयोनयः॥ स्त्रियोवैश्यास्तथाशूद्रास्तेपियांतिपरांगतिमिति॥ क्वचिन्म्लेच्छानामप्यधिकारः॥ हे
माद्रौदेवीपुराणे॥ ब्राह्मणैःक्षत्रियैर्वैश्यैःशूद्रैस्त्रीभिर्महेश्वर॥ पूजनीयोभक्तिमद्भिर्म्लेच्छैरन्यैश्चमानवैरिति ॥ सभर्तृकाणांस्त्रीणांभ
र्त्राज्ञांविनानाधिकारः॥ ॥तथाच्चमदनरत्नेमार्कंडेयपुराणे॥ ॥नारीखल्वननुज्ञाताभर्त्रापित्रासुतेनच॥ निष्फलंतुभवेत्तस्यायत्क
रोतिव्रतादिकमिति॥ भर्त्राद्याज्ञयातुसर्वव्रतेष्वधिकारः॥ स्त्रीणांव्रतग्रहणेविशेषोहेमाद्रौहरिवंशे॥ स्नानंचकार्यंशिरसःस्नाता-
फलमवाप्नुयादिति॥ अभर्तृकस्त्रीणामपिव्रतादिष्वधिकारः॥ तदुक्तंस्कांदे॥ भर्तृहीनातुयानारीसंयताविजितेंद्रिया॥ व्रता-

दीनांतुसंकल्पंदानंचस्वयमाहरेत् ॥ वैदिकंतांत्रिकंकर्मआचार्यद्वारतश्चरेदिति॥ ॥अथव्रतधर्माः॥ ॥ भारते॥गृहीत्वौ-
दुंबरंपात्रंवारिपूर्णमुदङ्मुखः॥उपवासंतुगृण्हीयाद्यद्वासंकल्पयेद्बुधः॥पात्राभावेहस्तेनापिजलंगृहीत्वासंकल्पयेदिति॥ अनंत
रकृत्यमाह॥ ॥मदनरत्नेदेवलः॥ ॥अभुक्त्वाप्रातराहारंस्नात्वाचम्यसमाहितः॥सूर्यायदेवताभ्यश्चनिवेद्यव्रतमाचरेत् ॥अत्र
प्रातर्व्रतमाचरेदित्येवान्वयः॥अन्येतुपूर्वदिनेएकभुक्तंनक्तंवाकृत्वासायंसंध्योत्तरंव्रतंसंकल्पयेदित्याहुः॥ ॥सर्वव्रतेषुसामा
न्यधर्माः॥ ॥भविष्ये॥ क्षमासत्यंदयादानंशौचमिंद्रियनिग्रहः॥देवपूजाग्निहवनंसंतोषस्तेयवर्जनं॥सर्वव्रतेष्वयंधर्मःसा
मान्योदशधास्थितः॥ देवलः॥ ब्रह्मचर्यमहिंसाचसत्यमामिषवर्जनम्॥व्रतेष्वेतानिचत्वारिचरितव्यानिनित्यशः॥व्रताद्यारंभेवृद्धि
श्राद्धंकार्यम्॥ तदाहशातातपः॥एतानिस्वापितृन्श्राद्धेकर्मकुर्यादनंतरमिति॥ गृहीतव्रतानाचरणेदोषमाह॥ ॥पूर्वंव्रतंगृही-
त्वायोनाचरेत्काममोहितः॥जीवन्भवतिचांडालोमृतश्वनरकंव्रजेत् इति॥ ॥प्रायश्चित्तमुक्तंस्कांदे॥ ॥क्रोधात्प्रमादाल्लोभाद्वा
व्रतभंगोभवेद्यदि॥दिनत्रयंनभुंजीतमुंडनंशिरसोथवा॥प्रायश्चित्तमिदंकृत्वापुनरेवव्रतीभवेत् इति॥ ॥उपवासलक्षणमाह॥ ॥

वसिष्ठः॥उपवासः सविज्ञेयः सर्वभोगविवर्जनमिति॥निराहारोपवासः॥उपवासेदंतधावनंकाष्ठेननिषिद्धम्॥तदभावेद्वादशगं-
डूषान्कुर्यात्॥ ॥तदुक्तंवसिष्ठेन॥ ॥उपवासेतथाश्राद्धेनकुर्याद्दंतधावनं॥तदभावेतुगंडूषान्कुर्याद्द्वादशचैवहि॥हारीतः॥
पतितपाखंड्यादिनास्तिकादिसंभाषणालोकादिकमुपवासादिषुव्रतादिकेषुवर्जयेदिति॥ पतितादेर्दर्शनेतुविष्णुपुराणे॥ ॥त
स्यावलोकनात्सूर्यंपश्येत्॥स्पर्शात्स्नानमाचरेत्॥अयुतंशक्तिविपदंजपेत्॥ ॥याज्ञवल्क्यः॥ ॥यदिवाग्यमलोपःस्याद्व्रत-
दानक्रियादिषु॥व्याहरेद्वैष्णवंमंत्रंस्मरेद्वाविष्णुमव्ययं॥यमः॥मानसेनियमेलुप्तेस्मरेद्विष्णुमनामयंइति॥बृहन्नारदीये॥र
जस्वलांचचांडालंमहापातकिनंतथा॥सूतिकांपतितंचैवउच्छिष्टरजकादिकं॥व्रतादिमध्येशृणुयाद्यद्येषांध्वनिमुत्तमः॥
अष्टोत्तरसहस्रंतुजपेद्वैवेदमातरमिति॥ वेदमातागायत्री॥ दक्षः ॥संध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसु॥गौडनिबं
धेमार्कंडेयपुराणे॥ सूर्योदयंविनानैवव्रतदानादिकःक्रमइति॥क्रमउपक्रमः॥ छंदोगपरिशिष्टे॥सदोपवीतिनाभाव्यंस-
दाबद्धशिखेनचेति॥ ॥मार्कंडेयपुराणे॥ ॥अधोवायुसमुत्सर्गेप्रहासेऽनृतभाषणे॥मार्जारमूषकस्पर्शेआक्रुष्टेक्रोध

संभवे॥निमित्तेष्वेषुसर्वत्रकर्मकुर्वन्नपःस्पृशेत्॥ ॥मार्कंडेयपुराणे॥ ॥शिरःस्नातश्चकुर्वीतदैवंपित्र्यमथाह्निकमिति॥ वायुपु
राणे॥ स्नानसंध्यातर्पणादिजपहोमामरार्चनं॥उपवासवताकार्यंसायंसंध्याहुतीर्विना॥ आपस्तंबः॥ त्रिमात्रस्तुप्रयोक्तव्यः क-
र्मारंभेषुसर्वशः॥त्रिमात्रःप्रणवः॥स्त्रीणांविशेषःपाद्मे॥ गर्भिणीसूतिकादिश्चकुमारीचापिरोगिणी॥ यदाशुद्धातदान्येनकारये
त्प्रयतास्वयमिति पाद्मे॥पूर्वसंकल्पितंयच्चव्रतंसुनियतव्रतैः॥तत्कर्तव्यंनरैःशुद्धंदेवार्चनविवर्जितमिति॥ केनकारयेदित्यपे
क्षायांपैठीनसिः॥भार्यापत्युर्व्रतंकुर्याद्भार्यायाश्चपतिर्व्रतमिति॥ ॥वायुपुराणे॥ ॥उपवासेत्वशक्तस्तुपुत्रादन्याच्चकारयेत्॥उ
पवासंप्रकुर्वाणःपुण्यंशतगुणंभवेत्॥नारीचपतिमुद्दिश्यएकादश्यामुपोषिता॥पुण्यंशतगुणंयायादित्याहगालवोमुनिः
॥मातामहादीनुद्दिश्यएकादश्यामुपोषणे॥कृतेतुतेफलंविप्राःसमग्रंफलमाप्नुयुः॥एतेप्रतिनिधयोनकाम्ये॥मंडनः॥का-
म्येप्रतिनिधिर्नास्तिनित्यनैमित्तिकेभवेत्॥काम्येष्युपक्रमादूर्ध्वंकेचित्प्रतिनिधिंविदुरिति॥ हविष्याणिकात्यायनः॥ हविष्ये
षुयवामुख्यास्तदनुव्रीहयःस्मृताः॥माषकोद्रवगौरादीन्सर्वाभावेऽपिवर्जयेत्॥ अग्निपुराणे॥ व्रीहीषाष्टिकमुद्गाश्चमठरःस

लिलंपयः॥श्यामाकाश्चैवनीवारागोधूमाद्याव्रतेहिताः॥कंदःसैंधवसामुद्रेगव्येचदधिसर्पिषी॥पयोनुद्धृतसारंचपनसाम्रहरीतकी॥पिप्पली
जीरकंचैवनागरंचैवर्वार्तितिणी॥ कदलीलवलीधात्रीफलान्यगुडमैक्षवम्॥अतैलपक्वंमुनयोहविष्याणिप्रचक्षते॥ मनुः॥ मुन्यंन्नानिपयः
सोमोमांसंयच्चानुपस्कृतं॥अक्षारलवणंचैवप्रकृत्याहविरुच्यते॥ अनुपस्कृतंअपक्वं ॥उपयुक्तवस्तूनिव्रतादौलिख्यंते ॥
आदित्यपुराणे॥ सुवर्णरजतंमुक्ताराजावर्त्तःप्रवालकम्॥ पंचरत्नमाख्यातं॥ कनकंकुलिशंनीलंपद्मरागंचमौक्तिकम्॥ एता
निपंचरत्नानि॥ कुलिशंहीरकं॥ स्मृत्यंतरे॥ अभावेसर्वरत्नानांहेमसर्वत्रयोजयेत्इति॥ पल्लवाः ब्रह्मांडपुराणे॥ अश्वत्थोदुंबर
प्लक्षचूतन्यग्रोधपल्लवाः॥ पंचगव्यंस्कांदे॥ गोमूत्रंगोमयंक्षीरंदधिसर्पिर्यथाक्रममिति॥ पंचामृतं शिवधर्मे॥ पंचामृतंदधिक्षीरं
सितामधुघृतंनृपेति॥ कात्यायनः॥ आज्यंक्षीरंमधुतथामधुरत्रयमुत्तममिति॥ सर्वौषध्यः॥ छंदोगपरिशिष्टे॥ कुष्टंमांसीहरि
द्रेद्वेमुराशैलेयचंदनं॥ वचाचंपकमुस्तंचसर्वौषध्योदशस्मृताइति॥ तत्रैव॥आपःक्षीरंकुशाग्राणिदध्यक्षततिलास्तथा॥यवाः
सिद्धार्थकाश्चैवतिल्वर्घोष्टांगःप्रकीर्तितइति॥ पंचरात्रे॥रजांसिपंचवर्णानिमंडलार्थेहिकारयेत्॥शालितंदुलजंशुक्लंरक्तंकोसुंभ

सैंदुरम्॥ हरितालोद्भवंपीतंकृष्णंदग्धयवोद्भवम्॥रजांसिपंचवर्णानिहरितंपीतकृष्णयुगिति॥ कौतुकसंभवानिभविष्ये॥ दूर्वायवां
कुराश्चैववालकंचूतपल्लवाः॥हरिद्राद्वयसिद्धार्थशिखिपत्रोरगत्वचः॥ कंकणौषधयश्चैवकौतुकाख्याभवाःस्मृताइति॥ सप्तमृदोमा-
त्स्ये॥ गजाश्वरथ्यावल्मीकसंगमात्ह्रदगोकुलात्॥मृदमानीयकुंभेषुप्रक्षिपेच्चत्वरादपि॥ भविष्ये॥ स्वर्णरजतंताम्रमारकूटंतथैवच॥लो
हंत्रपुस्तथासीसंधातवःसप्तकीर्तिताइति॥ तत्रैवसप्तधान्यानि॥ यवगोधूमधान्यानितिलाःकंगुस्तथैवच॥श्यामाकाश्चणकाश्चैवसप्तधा
न्यमुदाहृतमिति॥ कलशलक्षणंविष्णुधर्मे॥ हैमराजतताम्राश्चमृन्मयालक्षणान्विताः॥पंचाशांगुलवैपुल्याउत्सेधेषोडशांगुलाः॥-
द्वादशांगुलमूलास्युर्मुखमष्टांगुलंभवेदिति॥ प्रतिमाद्रव्यंतत्प्रमाणंभविष्ये॥ सौवर्णीराजतीताम्रीवृक्षजामार्त्तिकीतथा॥प्रिष्टजापि
ष्टलेपोत्थानिजवित्तानुसारतः॥आमाषात्पलपर्यंताकर्त्तव्याशाठ्यवर्जितैः॥अंगुष्ठपर्वादारभ्यावितस्त्यवधिकास्मृतेति॥ मात्स्ये॥ अनुक्त
संख्यायत्रस्याच्छतमष्टोत्तरंस्मृतं॥अष्टाविंशतिरष्टौवायथाशक्तिविधीयतइति॥ ब्राह्मे॥यथोक्तवस्त्वसंपत्तौग्राह्यंतदनुकारिपत्॥यवा
नामिवगोधूमाव्रीहीणामिवशालयः॥आज्यद्रव्यमनादेशेसर्वहोमेविधीयतइति॥मंत्रदेवतायाअभावेप्रजापतिरितिस्थितिः॥

समस्तव्याहृतिर्मंत्रः ॥ गारुडे ॥ प्रणवादिनमोंतंचचतुर्थ्यंतंचसत्तम ॥ देवतायाःस्वकंनामममूलमंत्रःप्रकीर्तितः ॥ ॥द्र-
व्यप्रतिनिधिरुक्तोहेमाद्रौ ॥ ॥दध्यलाभेपयःकार्यंमध्वालाभेनथागुडः ॥ घृतहोमेगव्यंमुख्यंतदभावेमाहिषमाज्यंचतदभावेतैलं
कौसुंभंसार्षपंचेति ॥ कात्यायनः ॥ अनंतर्गर्भकंसाग्रंकौशंद्विदलमेवच ॥ प्रादेशमात्रंविज्ञेयंपवित्रंयत्रकुत्रचित् ॥ अथेध्म
पलाशाश्वत्थखदिररोहितोदुंबराणां ॥ तदभावेकंटकवर्जंसर्ववनस्पतीनां ॥ समिद्धेग्नौहोतव्यं ॥ मंदाग्नावामयावीस्यादित्यादिदोषद
र्शनात् ॥ नकुर्यादग्निधमनंपाणिशूर्पादिभिःक्वचित् ॥ मुखेनैवधमेदग्निंयतोवेदाविनिःसृताइति ॥ ॥अथधूपः ॥ भविष्ये
अगरुंचंदनंमुस्तासिल्हकंवृषणंतथा ॥ समभागंतुकर्तव्यंधूपोयममृताह्वयः ॥ वृषणंकस्तूरी ॥ ॥सुवर्णादिमानं ॥ ॥पंच-
गुंजात्मकोमाषः ॥ तेषोडशकर्षः ॥ कर्षंचतुष्टयंपलं ॥ ॥धान्यमानं ॥ ॥पलंचकुडवंप्रस्थआढकोद्रोणएवच ॥ धान्यमानेषुबो
द्धव्याःक्रमशोमीचतुर्गुणाः ॥ ॥अन्यदपि ॥ ॥पलद्वयंप्रसृतंतद्विगुणंकुडवंतच्चतुर्गुणंप्रस्थः ॥ तच्चतुर्गुणमाढकः ॥ तच्चतुर्गु
णंद्रोणः ॥ द्रोणद्वयंकुंभः ॥ षोडशद्रोणाःखारीति ॥ ॥होमद्रव्यमानं ॥ पदार्थदर्शे ॥ कर्षप्रमाणमाज्यंस्याच्छुक्तिमात्रंपयःस्मृतं ॥

प्र॰ कौ॰
५

उक्तानिपंचगव्यानिशक्तिमात्राणिसाधुभिः ॥ तत्समंमधुदुग्धाऽन्नंग्रासमात्रमुदाहृतम् ॥ दधिप्रसृतमात्रंस्याल्लाजाःस्युर्मुष्टिसंमिताः
पृथुकास्तत्प्रमाणाःस्युःसक्तवोऽपितथाविधाः ॥ पलार्धंगुडमानंचशर्करापितथाविधा ॥ ग्रासार्धमात्रमन्नानामिक्षुःपर्वप्रमाणकः ॥ एकं
स्यात्तत्रपुष्पेचतथाधूपादिकल्पयेत् ॥ मातुलिंगंचतुःखंडंपनसंदशधाकृतम् ॥ अष्टधानारिकेरंचचतुर्धाकदलीफलम् ॥ त्रिधाकृतंत-
थाबैल्वंकपित्थंखंडितंद्विधा ॥ व्रीहयोमुष्टिमानाःस्युर्मुद्गामाषायवास्तथा ॥ तंडुलास्तत्तदर्धंतुकोद्रवामुष्टिसंमिताः ॥ लवणंशक्तिमा
त्रंस्यान्मरीचान्येकविंशतिः ॥ खंडत्रयंतुमूलानांफलानांस्वप्रमाणतः ॥ अन्येषांग्रासमात्रंतुप्रसृतिःपायसस्यतु ॥ अक्षतास्तुयवाःप्रो
क्तास्तंडुलाव्रीहयस्तथा ॥ एषांकेषांचिद्द्रव्याणामप्यसंभवेआज्यंउपादेयं ॥ ॥ भरद्वाजमतात् ॥ ॥ चंद्रचंदनकाश्मीरकस्तूरीय
क्षकर्दमान् ॥ फलोपसंमितानेतान्गुग्गुलंब दरास्थिवत् ॥ द्रव्यंस्त्रुवेणहोतव्यंपाणिनाकठिनंहविः ॥ ॥ अथऋत्विग्वरणं ॥ पाद्मे
बालाग्निहोत्रिणंविप्रंस्वरूपंचगुणान्वितम् ॥ सपत्नीकंचसंपूज्यभूषयित्वाचभूषणैः ॥ पुरोहितंमुख्यतमंकृत्वान्यांश्चतथर्त्विजः ॥ अ
हतांबरसंछंनान्स्रग्विणःशुचिभूषितान् ॥ अंगुलीयकानिचतथाकर्णवेष्टान्प्रदापयेत् ॥ वस्त्रयुग्मंतथोष्णीषंकुंडलेकंठभूषणम् ॥ ए

५

तानिचैवसर्वाणिप्रारंभेसर्वकर्मणां ॥ पुरोहितायदत्वाथऋत्विग्भ्यःसंप्रदापयेदिति ॥ ॥ व्रतानांमधुपर्कमाह ॥ ॥ विश्वामित्रः ॥ ॥
संपूज्यमधुपर्केणऋत्विग्भ्यःकर्मकारयेत् ॥ अपूज्यकारयन्कर्मकिल्बिषेणैवयुज्यते ॥ ॥ ऋत्विक्संख्यामात्स्ये ॥ ॥ हेमालंकारिणः
कार्याः पंचविंशतिसंख्यया ॥ दक्षिणाचसमंसर्वानाचार्येद्विगुणंभवेदिति ॥ ॥ अथसर्वतोभद्रमंडलंस्कांदे ॥ ॥ प्रागुदीच्यायता
रेखाःकुर्यादेकोनविंशतिं ॥ खंडेंदुस्त्रिपदैःकोणेशृंखलापंचभिःपदैः ॥ एकादशपदावल्लीभद्रंतुनवभिःपदैः ॥ चतुर्विंशसदावापीपरि
धिर्विंशतिःपदैः ॥ मध्येषोडशभिःकोष्ठैःपद्ममष्टदलंस्मृतम् ॥ श्वेतेंदुःशृंखलाकृष्णावल्लीनीलेनपूरयेत् ॥ भद्रारुणासितावापीपरिधिः
पीतवर्णकः ॥ बाह्यांतरदलाश्वेताकर्णिकापीतवर्णका ॥ परिध्यावेष्टितंपद्मंबाह्येसत्वंरजस्तमः ॥ तन्मध्येस्थापयेद्देवान्ब्रह्माद्यांश्वसु
रासुरान् ॥ ॥ इतिसर्वतोभद्रम् ॥ ॥ अथाष्टलिंगतोभद्रमाग्नेये ॥ ॥ चतुर्विंशतिरालेख्यारेखाःप्राक्दक्षिणायताः ॥ को
णेषुशृंखलाःपंचपदावल्यस्तुपार्श्वतः ॥ पदैर्नवभिरालेख्याश्चतुर्भिर्लघुशृंखलाः ॥ लघुवल्यःपदैःषड्भिस्ततोष्टादशभिःपदैः ॥ कृ-
त्वालिंगानिवाप्यस्युस्त्रयोदशभिरंतरा ॥ ततोवीथिद्वयेनैवपीठंकुर्याद्विचक्षणः ॥ तस्यपादाःपंचपदैर्द्वाराण्यपितथैवच ॥ एकाशी-

तिपदंमध्येपद्मंस्वस्तिकमुच्यते ॥ कोणेषुश्रृंखलाःकार्याःपदैस्त्रिभिरतःपरं ॥ पदैश्चतुर्भिर्दिक्षुस्युर्भद्राण्येषांसमंततः ॥ एकादशपदाव
त्योमध्येष्टदलमालिखेत् ॥ पद्मंनवपदंह्येवंलिंगतोभद्रमुच्यते ॥ श्रृंखलाःकृष्णवर्णेनवल्लीनीलेनपूरयेत् ॥ रक्तेनश्रृंखलालघ्वीर्वल्लीः
पीतेनपूरयेत् ॥ लिंगानिकृष्णवर्णानिश्वेतेनाप्यथवापिकाः ॥ पीठंसपादंश्वेतेनपीतेनद्वारपूरणं ॥ मध्येस्युःश्रृंखलारक्तावल्लीर्नीलेन-
पूरयेत् ॥ भद्राणिपीतवर्णानिपीतापंकजकर्णिका ॥ दलानिश्वेतवर्णानियद्वाचित्राणिकल्पयेत् ॥ तिस्रोरेखाबहिःकार्याःसितरक्ता
सिताःक्रमादिति ॥ ॥ अथद्वादशलिंगतोभद्रं ॥ लैंगे ॥ प्रागुदीच्यायतारेखाःषट्त्रिंशद्विप्रकल्पयेत् ॥ पदानिद्वादशशतंपंच-
विंशतिरेवच ॥ खंडेंदुस्त्रिपदाःकोणेश्रृंखलाषट्पदैःस्मृता ॥ त्रयोदशपदावल्लीभद्रंतुनवभिःपदैः ॥ त्रयोदशपदावापीलिंगमष्टादशैः
स्मृतम् ॥ लिंगत्रयस्यपंक्तौतुशोभाकोष्ठाश्चतुर्दश ॥ तेषामुपरिपंक्तौतुकोष्ठाःसप्तदशैवतु ॥ पूजापंक्तिस्ततःविज्ञेयापरितःपरिकल्पिता
पूजापंक्त्यंतरापंक्तौकोष्ठाद्व्यशीतिसंख्यया ॥ परिधिःसतुविज्ञेयोऽंतरामंडलयोर्द्वयोः ॥ परिध्यंतरकोष्ठेषुसर्वतोभद्रमालिखेत् ॥
विशेषश्चात्रविज्ञेयःश्रृंखलाषट्पदाभवेत् ॥ त्रयोदशपदावल्लीभद्रंतुनवभिःपदैः ॥ पंचविंशत्पदावापीपरिधिःषोडशात्मकः ॥ मध्ये

नवपदं पद्मं कर्णिकाकेसरान्वितम् ॥ सत्वं रजस्तमो वर्णाः परितो मंडलस्य तु ॥ त्रयः परिधयः कार्या स्तत्र द्वाराणि कारयेत् ॥ सितेंदुः श्रृंख
लाकृष्णा वल्ली नीला प्रकीर्तिता ॥ भद्रं वै चारुणं ज्ञेयं वापी स्याच्छुक्लवर्णिका ॥ लिंगानि कृष्णवर्णानि पार्श्वतो द्वादशैव तु ॥ परिधिः पीतवर्ण
स्यात्कमलं पंचवर्णकं ॥ ॥ अथ चतुर्लिंगतोभद्रम् ॥ लैंगे ॥ रेखास्त्वष्टादश प्रोक्ताश्चतुर्लिंगसमुद्भवे ॥ कोणेंदुस्त्रिपदः श्वेतस्त्रिप
दैः कृष्णश्रृंखला ॥ वल्ली सप्तपदा नीला भद्रं रक्तं चतुष्पदं ॥ भद्रपार्श्वे महारुद्रं कृष्णमष्टादशैः पदैः ॥ शिवस्य पार्श्वतो वापीं कुर्यात्पंचपदां सि
तां ॥ एकं पदं तथा पीतं भद्रवाप्योस्तु मध्यतः ॥ सिरसि श्रृंखलायाश्च कुर्यात्पीतं पदत्रयं ॥ लिंगानां स्कंदतः कोष्ठा विंशती रक्तवर्णकाः ॥ परि
धिः पीतवर्णोस्तु पदैः षोडशभिः स्मृतं ॥ पदैस्तु नवभिः पश्चाद्रक्तं पद्मं सकर्णिकं ॥ ॥ एकलिंगतोभद्रं ॥ गौरीतिलके ॥ ॥ तिर्यगू
र्ध्वगता रेखाः कार्याः स्निग्धास्त्रयोदश ॥ कोणेंदुस्त्रिपदः कार्यः श्रृंखलास्त्रिपदाः स्मृताः ॥ वल्ली तु षट्पदा नीला भद्रं रक्तं प्रकल्पयेत् ॥ प
दैर्द्वादशभिः स्पष्टमुत्तरे पूर्वदक्षिणे ॥ पश्चिमायां महारुद्रं अष्टाविंशतिकोष्टकैः ॥ लिंगपार्श्वे तथा मूर्ध्नि अष्टौ कोष्ठाः स्युः पीनकाः ॥ लिंग-
मेकं तथा गौर्यास्त्रिस्रस्सुरत्र मंडले ॥ पूजयेन्मंडलं चैतत्तस्य गौरी प्रसीदति ॥ ॥ अथ मुद्राः ॥ तंत्रांतरे ॥ ॥ देवतानेन संतुष्टा

सर्वदासंमुखीभवेत्॥ अंगुष्ठेनिक्षिपेत्सेयंमुद्रात्वावाहनीमता॥ संग्रथ्यनिक्षिपेत्सेयंमुद्रात्वासनसंज्ञिका॥ अधोमुखीत्वियंचेत्स्यात्स्थाप
नीमुद्रिकामता॥ उच्छ्रितावुच्छ्रितौकुर्यात्संमुखीकरणीभवेत्॥ प्रसृतांगुलिकौहस्तौमिथःश्लिष्टौतुसंमुखौ॥ कुर्यात्स्वहृदयेसेयंमुद्रा
प्रार्थनसंज्ञिका॥ इत्येवसर्वदेवानांपूजनेषट्प्रदर्शयेत्॥ ॥ शिवपूजायाम्॥ ॥ लिंगमुद्रा॥ ॥ उच्छ्रितंदक्षिणांगुष्ठंवामांगु
ष्ठेनबंधयेत्॥ वामांगुलीर्दक्षिणाभिरंगुलीभिश्चवेष्टयेत्॥ लिंगमुद्रेयमाख्यानाशिवसांनिध्यकारिणी॥ श्रीकामःशीर्षिर्षिकुर्वीतरा-
ज्यकामस्तुनेत्रयोः॥ मुखेत्वन्नाद्यकामस्तुपादयोःस्वर्गकामस्त्विति॥ ॥ ज्ञानमालायां॥ ॥ नाक्षतैरर्चयेद्विष्णुंनतुलस्यागण-
णाधिपम्॥ नदूर्वयायजेद्देवींनसूर्यंबिल्वपत्रकैः॥ औन्मत्तमर्कपुष्पंचविष्णोर्वर्ज्यंसदाबुधैः॥ अक्षतास्तुयवाःप्रोक्ताइति॥ ॥
तंत्रांतरे॥ ॥ महाभिषेकंसर्वत्रशंखेनैवप्रकल्पयेत्॥ सर्वत्रैवप्रशस्तोयःशिवसूर्यार्चनंविनेति॥ ॥ अथव्रतोद्यापनानु
क्रोविधिः॥ ॥ नंदीपुराणे॥ ॥ कुर्यादुद्यापनंतस्यसमाप्तौयदुदीरितं॥ उद्यापनंविनायत्तुतद्व्रतंनिष्फलंभवेत्॥ यत्रचो
द्यापनंनोक्तंव्रतानुगुणतश्चरेत्॥ वित्तानुसारतोदद्यादनुक्तोद्यापनेव्रते॥ गांचैवकांचनंदद्याद्व्रतस्यपरिपूर्तये॥ गौःप्रत्यक्षा॥ ॥

तन्मौल्यंचवा॥ गवांमौल्यंत्तुनिष्कः स्यात्तदर्धपादमेवच॥ सुवर्णरौप्यंवा॥ उक्तोद्यापनेतु॥ आदौमध्येतथाचांतेव्रतस्योद्यापनंभवेदिति॥ ॥व्रतभंगेसंपूर्णताविधिः॥ भविष्ये ॥ कृष्णउवाच ॥ किंचिद्व्यंग्यंप्रमादेनयत्कृतंव्रतिनांस्थितम्॥ तत्संपूर्णंभवेत्सर्वंव्रतेनानेनपांडव॥ यस्यव्रतस्ययोदेवस्तद्रूपंहेमनिर्मितम्॥ द्विभुजंपंकजारूढंकार्यंप्रहसिताननम् ॥ स्नापयेत्पयसादध्नाघृतक्षौद्ररसांबुभिः॥ गंधचंदनपुष्पैश्चपूजांकुर्यात्समाहितः॥ तोयपूर्णस्यकुंभस्यमुखेविन्यस्यदेवताम्॥ धूपदीपाक्षतैर्वस्त्रैरत्नैर्बहुप्रकारकैः॥ अर्घ्यंदद्याच्चतन्नाम्नामंत्रेणानेनपांडव॥ उपवासस्यदानस्यप्रायश्चित्तंकृतंमया॥ शरणंचप्रपन्नास्मिन्कुरुष्वाद्यदयापुनः॥ प्रसन्नोभवमेनीतस्यभिन्नंचर्यंव्रतस्यच॥ कुरुप्रसादंसंपूर्णंव्रतंसंजायतांमम ॥ यन्नच्छिद्रंनपश्चिच्छिद्रंयच्छिद्रंव्रतकर्मणि॥ तत्सर्वंत्वत्प्रसादेनसंपूर्णंजायतांमम ॥ पूर्वदक्षिणपश्चाच्चउत्तरेचबलिंहरेत् ॥ उपर्यधस्तात्सर्वेभ्योदिक्पालेभ्योनमोनमः॥ इदमर्घ्यमिदंपाद्यंतेभ्यस्तेभ्योनमोनमः॥ पादौचजानुनीचैवकटिंशीर्षकवक्षसी॥ कुक्षिंचहृदयंपृष्ठंवाचंचक्षुः शिरोरुहान्पूजयित्वास्यदेवस्यततःपश्चात्क्षमापयेत् ॥ पूजितस्त्वंयथाशक्त्यानमस्तेस्तुसुरोत्तम॥ ऐहिकामुष्मिकींदेवकार्यसिद्धिंममप्रभो॥

एवंक्षमापयित्वातुदेवंविप्रायदापयेत् ॥ दानेपूर्वासुखोविप्रोदातावैचोत्तरामुखः ॥ इदंव्रतंमयाखंडंकृतमासीत्सुराद्द्विज ॥ तत्सर्वंपूर्णमे
वास्त्वत्वमूर्त्तिप्रसादतः ॥ ब्राह्मणोपिप्रयच्छेतमंत्रेणानेनतेव्रतम् ॥ संपूर्णस्यात्प्रसादेनदेवदेवस्यशार्ङ्गिणः ॥ ब्राह्मणायत्प्रभाषंतेतन्म
न्यंतेदिवौकसः ॥ सर्वदेवमयाविप्रानतद्वचनमन्यथा ॥ व्यासवाल्मीकवचनात्पराशरवसिष्ठयोः ॥ गर्गगौतमधौम्यात्रिवसिष्ठांगिरसां
तथा ॥ वचनान्नारदादीनांपूर्णंभवतुतेव्रतम् ॥ एवंविधिविधानेनगृहीत्वाब्राह्मणोव्रजेत् ॥ ततः पंचमहायज्ञान्निर्वपेद्भोजनादिकम्
एवंयःकुरुतेभक्त्याव्रतमेतन्नरोत्तम ॥ तस्यसंपूर्णतांयातितद्व्रतंयत्सुराकृतम् ॥ खंडंसंपूर्णतांयातिप्रसन्नेव्रतदेवतइति ॥ ॥
अथाचार्यकृत्यं ॥ ॥ वृताचार्योदर्भेष्वासीनोदर्भान्धारयमाणःप्राणानायम्यदेशकालौसंकीर्त्यामुकव्रतोद्यापनेयजमानेनवृतोऽ
हम् आचार्यकर्मकरिष्ये ॥ गणपतिंसंपूज्य ॥ शरीरशुद्ध्यर्थंपवनपावनभूतशुद्ध्यादिपुरुषसूक्तन्यासांश्चकुर्यात् ॥ उक्तरीत्यापवनपाव
नादिकृत्वा ॥ पुरुषसूक्तन्यासान्आरभेत् ॥ तद्यथा ॥ सहस्रशीर्षेतिषोडशर्चस्यसूक्तस्यनारायणऋषिः पुरुषोदेवताऽनुष्टुप्छं
दः अंत्यात्रिष्टुप्न्यासादौपूजायांचविनियोगः ॥ ॐम् सहस्रशीर्षा॰ वामकरायनमः ॥ पुरुष ए॰ दक्षिणकराय॰ एतावान॰ वाम

दाय॰ त्रिपादूर्ध्व॰ दक्षिणपा॰ तस्माद्विराळ॰ वामजान॰ यत्पुरुषेण॰ दक्षिणजानवे॰ तंयज्ञं॰ वामकट्यै॰ तस्माद्यज्ञा॰ संभृ॰ दक्षि-
णकट्यै॰ तस्माद्यज्ञा॰ ऋचः॰ नाभ्यै॰ तस्मादश्वा॰ हृदयाय॰ यत्पुरुषंव्यद॰ कंठायन॰ ब्राह्मणोस्य॰ वामबाहवे॰ चंद्रमाम॰ दक्षिणबाह
वे॰ नाभ्याआसी॰ मुखाय॰ सप्तास्या॰ नेत्राभ्यां॰ यज्ञेनयज्ञ॰ मूर्ध्नेन॰ ॥अथपंचांगन्यासः ॥ब्राह्मणोस्य॰ हृदयाय॰ चंद्रम
शिरसे॰ नाभ्याआसी॰ शिखायैवषट् सप्तास्यास॰ कवचाय॰ यज्ञेन॰ अस्त्रायफट् ॥ ॥ततः पुरुषसूक्तेनत्रिवारंव्यापकंकु
र्यात् ॥ ॥ततः यागभूमिंगत्वासर्वतःसर्षपान्विकिरेत् ॥ यदत्रसंस्थितंभूतमितिमंत्रद्वयेन ॥ततः साधितपंचगव्येनकुशैःसर्व
त्रप्रोक्षणं॥ शुचीवोहव्येति॰ आपोहिष्ठेतितृचेनकार्यम् ॥ ततःकृतांजलिः॥ स्वस्त्ययनंतार्क्ष्यमितिमंत्रद्वयंपठेत् ॥देवाःआयां
तु यातुधानाःअपआयांतुविष्णोदेवयजनंरक्षस्वेतिवदेत् ॥ ततःसर्वतोभद्रेलिंगतोभद्रेवाब्रह्मादिदेवतास्थापयेत् ॥ तद्यथा॥
मध्ये ॥ ब्रह्मजज्ञानंगोतमोवामदेवोब्रह्मात्रिष्टुप् ॥ब्रह्मावाहनेविनियोगः ॥ ॐ ब्रह्मजज्ञानं॰ ब्रह्मणेनमः॥ ब्रह्माणमावाहयामि
एवंसर्वत्र ॥ मंडलाद्बहिःप्रागादिक्रमेणलोकेशान् ॥पूर्वे॥त्रातारंगर्गइंद्रस्त्रिष्टुप् ॥इंद्रावा॰त्रातारमिंद्र॰ इंद्रमावा॰आग्नेयां अग्निर्दूतंका

ण्वोमेधातिथिरग्निर्गायत्री ॥ अग्न्यावा॰ अग्निंदूतंवृ॰ अग्निं दक्षिणस्यां॥ यमायसोमंयमोयमोनुष्टुप् ॥ यमावा॰ यमायसोमं॰ यमंनिर्ऋ
त्याम् ॥ मोषुणोघोरःकाण्वोनिर्ऋतिर्गायत्री ॥ निर्ऋत्यावा॰ मोषुणःपरापरा॰ निर्ऋतिं॰ पश्चिमे ॥ तत्वायामिशुनःशेपोवरुणस्त्रिष्टुप्
वरुणावाह॰ तत्वायामि॰ वरुणं॰ वायव्यां ॥ वायोशतंगोतमोवायुरनुष्टुप् ॥ वाय्वावाहनेविनि॰ वायोशतं॰ वायुं॰ उत्तरे ॥ आप्यायस्वरा
हुगणोगोतमःसोमोगायत्री सोमावाह॰ आप्यायस्वस॰ सोमं॰ ईशान्यां ॥ तमीशानंगोतमईशानोजगती ईशानावा॰ तमीशानंजग॰
ईशानं॰ ईशानेंद्रयोर्मध्ये ॥ ज्मयाअत्रमैत्रावरुणोवसवस्त्रिष्टुप् वस्वावाहनेवि॰ ज्मयाअत्रवसवो॰ वसून॰ इंद्राग्निमध्ये आरुद्रा
सश्यावाश्वएकादशरुद्रोजगती ॥ एकादशरुद्रावा॰ आरुद्रासः एकादशरुद्रान्आ॰ अग्नियमयोर्मध्ये त्यान्नुसामदोमत्स्योद्वादशा
दित्यागायत्री द्वादशादित्यावा॰ त्यान्नुक्षत्रियांअव॰ द्वादशादित्यानावा॰ यमनिर्ऋतिमध्ये मरुतोयस्यराहुगणोमरुतोगायत्री॰ मरुतावा॰
मरुतोयस्य॰ मरुतःआ॰ निर्ऋतिवरुणयोर्मध्ये॰ ओमासोमधुछंदाविश्वेदेवागायत्री विश्वेदेवावा॰ ओमासश्चर्ष॰ विश्वान्देवान्॰
वरुणवायुमध्ये॰ यज्ञेनयज्ञमितिनारायणःपुरुषस्त्रिष्टुप् ॥ साध्यदेवावा॰ यज्ञेनयज्ञम॰ साध्यान्देवान्॰ वायुसोममध्ये॰ अश्वि-

नावर्त्तिराहूगणोगौतमोश्विनावुष्णिक् अश्व्यावा॰ अश्विनावर्त्ति॰अश्विनौ॰ सोमेशानयोर्मध्ये ॥ यदक्रंदोदीर्घतमास्कंदस्त्रिष्टुप्
स्कंदावा॰ यदक्रंद॰ स्कंदंआ॰ ब्रह्मेंद्रमध्ये ॥ इदंविष्णुर्मेधातिथिर्विष्णुर्गायत्री ॥ विष्णवावा॰ इदंविष्णुर्वि॰ विष्णुंआ॰ ब्रह्माग्निमध्ये
गणानांत्वा गृत्समदोगणपतिर्जगती ॥ गणपत्यावाहनेविनि॰ गणानांत्वा॰ गणपतिंआ॰ ब्रह्मयममध्ये आयंतुनःप्रजापतिःपितरस्त्रिष्टु
प् पित्रावा॰ आयंतुनःपितरः॰ पितॄन्आवा॰ ब्रह्मनिर्ऋतिमध्ये॰ अप्सरसांमैत्रावरुणिर्गंधर्वाप्सरसोनुष्टुप् गंधर्वाप्सरसावाहनेविनि॰
अप्सरसां॰ गंधर्वाप्सरसंआ॰ ब्रह्मवरुणमध्ये॰ जज्ञानंप्रजापतिःसप्तमातरोनुष्टुप् सप्तमात्रावा॰ जज्ञानंसप्तमात॰ सप्तमातॄः॰ ब्रह्मवा
युमध्ये नमोअस्तुसर्पेभ्योविश्वेदेवाःसर्पाअनुष्टुप् सर्पावा॰ नमोअस्तुसर्पेभ्यो॰ सर्पान्आ॰ ब्रह्मसोममध्ये॰ तामग्निवर्णांसोभरि
र्दुर्गा त्रिष्टुप् दुर्गावाहनेविनियोगः ॥ नामग्निवर्णां॰ दुर्गांआ॰ ब्रह्मेशानमध्ये इमंमेगंगेक्षिप्रैय्यमेधागंगानद्योजगती गंगाद्यावा॰
इमंमेगंगे॰ गंगादिनदीः आवा॰ ततःमंडलांतःपद्मेशानदलाग्रादारभ्यदलाग्राष्टकेषु ऐशान्यां अदितिर्लौक्योदक्षोनुष्टुप् दक्षावा॰
अदितिर्ह्यजनिष्ट॰ दक्षआ॰ पूर्वे सहस्रशीर्षेतिनारायणःपुरुषोनुष्टुप् नारायणावा॰ सहस्रशीर्षा॰ पुरुषंआ॰ आग्नेयाम् जात

वेदसेकश्यपोदुर्गात्रिष्टुप् दुर्गावा॰ जातवेदसे॰ दुर्गाआ॰ दक्षिणस्यां उदीरतांशंखः स्वधात्रिष्टुप् स्वधावा॰ उदीरतामवर॰ स्वधां-
आवा॰ निर्ऋत्यां॰ परंमृत्योः संकुशिकोमृत्युस्त्रिष्टुप् मृत्युवावा॰ परंमृत्योअनु॰ मृत्युंआवा॰ पश्चिमे आयंगोः सार्पराज्ञीसर्पागा
यत्री सर्पावा॰ आयंगोः॰ शेषंआ॰ वायव्यां धाम्नोधाम्नोराजन्सप्तसागराअष्टी सप्तसागरावा॰ धाम्नोधाम्नो॰ सप्तसागरान्आ
वा॰ उत्तरे मरुतोयस्यराहुगणोमरुतोगायत्री मरुतावाहनेवि॰ मरुतोयस्य॰ मरुतःआ॰ मध्येब्रह्मणः पादमूले आतूनइंद्रे
तिप्रजापतिर्गणपतिर्गायत्री गणपत्यावा॰ आतूनइंद्र॰ गणपतिंआ॰ कर्णिकाधः स्योनापृथिवीकाण्वोमेधातिथिर्भूमिर्गायत्री
भूम्यावा॰ स्योनापृथिवी॰ भूमिंआवा॰ तदुपरि मेरवेनमः मेरुंआ॰ ततःपरितः पूर्वादिक्रमेण पूर्वे अग्निमीळेति ऋग्वेदंआ
वा॰ दक्षिणस्यांइषेत्वेतियजुर्वेदंआ॰ पश्चिमे॥ अग्नआयाहिवीतयेइतिसामवेदंआ॰ उत्तरे शन्नोदेवीतिअथर्ववेदंआ॰
मंडलबाह्ये पूर्वादिक्रमेण दिक्पालायुधवाहनानि पूर्वे वज्राय॰ आग्नेयादि शक्तये॰ दंडाय॰ खड्गाय॰ पाशाय॰ अंकुशाय॰ गदा
ये॰ त्रिशूला॰ पुनःपूर्वादि तद्वाह्ये ऐरावताय॰ मेषाय॰ महिषाय॰ प्रेताय॰ मकरा॰ एणाय॰ शिबिकायै॰ वृषभाय॰ पु

नः पूर्वामारभ्य तद्वाह्ये गौतमायनमः भरद्वाजाय॰ विश्वामित्रा॰ कश्यपाय॰ जमदग्नयेन॰ अत्रये॰ वसिष्ठा॰ अरुंधत्यै॰ तद्वाह्ये
पूर्वादि आदित्यादिग्रहान् पूर्वे सूर्य॰ एवंअग्ने॰ सोमं॰ भौमं॰ बुधं॰ गुरुं॰ शुक्रं॰ शनिं॰ राहुं॰ पूर्वे शांतराले केतुं॰ तद्वाह्ये शक्त
यः पूर्वादि ऐंद्रीं॰ कौमारीं॰ ब्राह्मीं॰ वाराहीं॰ चामुंडां॰ वैष्णवीं॰ माहेश्वरीं॰ वैनायकीं॰ स्थाप्य तद्रक्तमित्रावरुणा॰ गृहावेश
निष्ठासूक्तं॰ प्रतिष्ठाप्यपूजयेत् तद्यथादेशकालौसंकीर्त्य ब्रह्मादिस्थापितदेवतानांषोडशोपचारैःपूजनमहंकरिष्ये॥ ॥
स्ववामतः जलपूर्णकलशंप्रतिष्ठाप्यसंपूज्यगंगाद्यावाह्य ततः दक्षिणतः शंखंसंपूज्य घंटांसंपूज्य आत्मानंपूजासामग्रींच
संप्रोक्ष्य॥ तत्तन्मंत्रैर्नाममंत्रैर्वापुरुषसूक्तेनचपूजयेत् ततः मंडलोपरिअक्षतपुंजेकलशंप्रतिष्ठापयेत् तद्यथा ॐ महीद्यौरि
तिभूमिंस्पृष्ट्वा॰ ओषधयःसंवदंतेइतियवादिकान्क्षिप्त्वा॰ आकलशेषुधावतिइतिकलशंसंस्थाप्य॰ इमंमेगंगेतिजलंआपूर्य॥
गंधद्वारामितिगंधंक्षिप्त्वा॥ याओषधिरितिसर्वौषधीःक्षिप्त्वा कांडात्कांडादितिदूर्वाः अश्वत्थेवोइतिपंचपल्लवान् स्योनापृथिवि
इतिसप्तमृदः॥ याःफलिनीर्याइतिफलं सहिरत्नानीतिरत्नं हिरण्यरूपइतिहिरण्यं युवासुवासाइतिवस्त्रेणावेष्ट्य पूर्णादर्वीतिउप

रिपूर्णपात्रंन्यसेत् ॥ तत्वायामीतिवरुणंआवाह्य पूजयेत् कलशस्यमुखेविष्णुरित्यादिआवाह्यप्रार्थयेत् ॥ देवदानवसंवादेमथ्यमाने
महोदधौ ॥ उत्पन्नोसितदाकुंभविधृतोविष्णुनास्वयम् ॥ त्वत्तोयेसर्वतीर्थानिदेवाःसर्वेत्वयिस्थिताः ॥ त्वयितिष्ठंतिभूतानित्वयिप्राणाः
प्रतिष्ठिताः ॥ शिवःस्वयंत्वमेवासिविष्णुस्त्वंचप्रजापतिः ॥ आदित्यावसवोरुद्राविश्वेदेवाःसपैतृकाः ॥ त्वयितिष्ठंतिसर्वेपियतःका-
मफलप्रदाः ॥ त्वत्प्रसादादिमंयज्ञंकर्तुमीहेजलोद्भव ॥ सान्निध्यंकुरुदेवेशप्रसन्नोभवसर्वदा ॥ ॥ ततःप्रतिमानांअग्न्युत्तारणंकुर्यात्
तद्यथा ॥ देशकालौसंकीर्त्य अस्यदेवस्यपूज्यत्वाधिकारसिध्यर्थमग्न्युत्तारणंकरिष्ये ॥ अग्निःसप्तिमितिसप्तर्चस्यसूक्तस्यसोचि
कोवैश्वानरस्त्रिष्टुप् ॥ अग्न्युत्तारणेविनियोगः ॥ सप्तिंवाजंभरंददाति॰ ॥ अग्निःसप्तिं॰ ॥ अश्मन्नूर्जेत्यनुवाकेनवा ॥ ॥ अथप्राणप्र
तिष्ठा ॥ ॥ अस्यश्रीप्राणप्रतिष्ठामंत्रस्यब्रह्मविष्णुमहेश्वराऋषयः ॥ ऋग्यजुःसामाथर्वाणिछंदांसि ॥ चैतन्यरूपापराप्राणशक्तिर्देवता
आंबीजंह्रींशक्तिः ॥ क्रोंकीलकं ॥ देवस्यप्राणप्रतिष्ठापनेविनियोगः ॥ ॐ आंह्रींक्रों अंकंखंगंघंङं आंक्रोंह्रींआंपृथिव्यप्तेजोवाय्वाका
शात्मने आं अंगुष्ठाभ्यांनमः ॐ आंह्रींक्रोंइंचंछंजंझंञं ईंक्रोंह्रींआंशब्दस्पर्शरसरूपगंधात्मने ईंतर्जनीभ्यांनमः ॐ आंह्रींक्रोंउंटंठंडं

ढंणंऊं क्रौंह्रींआंश्रोत्रत्वक्चक्षुर्जिह्वाघ्राणात्मने ऊंमध्यमाभ्यांनमः ॥ ऐंआंह्रींक्रोंएंनंथंदंधंनंऐंक्रोंह्रींआंवाक्पाणिपादपायूपस्थात्म
ने ऐंअनामिकाभ्यांनमः ॥ ॐ आंह्रींक्रों पंफंबंभंमं ओं क्रोंह्रींआंवचनदानगतिविसर्गात्मने औंकनिष्ठिकाभ्यांनमः ओं आंह्रींक्रोंअंयंरं
लंवंशंषंसंहंक्षंअः क्रोंह्रीं आंमनोबुध्यहंकारचित्तविज्ञानात्मनेकरतलकरपृष्ठाभ्यांनमः ॥ ॥ एवंहृदयादि ॥ ॥ ओंआंह्रींक्रोंअंयं
रंलंवंशंषंसंहंक्षंअः क्रोंह्रींआंदेवस्यप्राणइहप्राणाः ॥ ओंआंह्रींक्रोंअंयंरंलंवंशंषंसंहंक्षं अः क्रोंह्रींआंदेवस्यजीवइहस्थितः ओंआंह्रींक्रों
अंयंरंलंवंशंषंसंहंक्षंअः क्रोंह्रींआंदेवस्यसर्वेंद्रियाणिवाङ्मनस्त्वक्चक्षुःश्रोत्रजिह्वाघ्राणपाणिपादपायूपस्थइहैवागत्यसुखंचिरं-
तिष्ठंतुस्वाहा ॥ असुनीतइतिऋचंपठेत् ॥ गर्भाधानादिपंचदशसंस्कारसिद्ध्यर्थंपंचदशप्रणवावृत्तिंकरिष्ये १५ ततः रक्तांभोधि
स्थपोतोल्लसदरुणसरोजाधिरूढाकराब्जैः पाशंकोदंडमिक्षूद्भवगुणमथमप्यंकुशंपंचबाणान् ॥ बिभ्राणासृक्कपालंत्रिनयनलसिता
पीनवक्षोरुहाढ्यादेवीबालार्कवर्णाभवतुसुखकरीप्राणशक्तिः परानः ॥ ततः ॥ चत्वारिवागितिपठेत् ॥ ततः कलशस्थपूर्णपात्रोपरिसा
वरणंदेवंतत्तद्देवताप्रकाशमंत्रेणसंस्थाप्यपूजयेत् ॥ पात्रांतरेवापंचामृतस्नानपर्यंतंसंपूज्य तदनंतरंकलशंस्थापयेदितिवा ॥ ॥ अथ

पूजाविधिः ॥ ॥ सर्वव्रतेषुसामान्यतःउच्यते ॥ ॥ आगच्छदेवदेवेशतेजोराशेजगत्पते ॥ क्रियमाणांमयापूजांगृहाणसुरसत्तम ॥ स
हस्रशीर्षेत्यावाहनं ॥ नानारत्नसमायुक्तंकार्तस्वरविभूषितं ॥ आसनंदेवदेवेशप्रीत्यर्थंप्रतिगृह्यतां ॥ पुरुषएवेदमासनं ॥ पाद्यंगृहाण
देवेशसर्वक्षेमकरप्रभो ॥ भक्त्यासमर्पितंदेवलोकनाथनमोस्तुते ॥ एतावानस्येतिपाद्यं ॥ नमस्तेदेवदेवेशनमस्तेधरणीधर नमस्तेजग
दाधारअर्घ्यंनःप्रतिगृह्यताम् त्रिपादूर्ध्वमितिअर्घ्यं· कर्पूरवासितंतोयंमंदाकिन्याःसमाहृतं ॥ आचम्यतांजगन्नाथमयादत्तंहिभक्तितः
तस्माद्विराळेत्याचमनी· शर्करारससंयुक्तंपयोदधिघृतंमधु ॥ पंचामृतंमयानीतंस्नानार्थंप्रतिगृह्यताम् ॥ ॥ पंचामृतस्नानं ॥ ॥ आ
प्यायस्वेतिपयःस्नानं ॥ दधिक्राव्णइतिदधिस्नानं ॥ घृतंमिमिक्षेतिघृतस्नानं ॥ मधुवातेतिमधुस्नानं ॥ स्वादुःपवस्वेतिशर्करास्नानं
आपोहिष्ठेतिशुद्धोदकेनसंस्नाप्यपंचोपचारैःसंपूज्यमहाभिषेकंकुर्यात् ॥ गंगाचयमुनाचैवनर्मदाचसरस्वती ॥ तापीपयोष्णीकृष्णाच
ताभ्यःस्नानार्थमाहृतं ॥ तोयमेतत्सुरवस्पर्शंस्नानार्थंप्रतिगृह्यतां ॥ यत्पुरुषेणेतिस्नानं ॥ रुद्रेणपुरुषसूक्तेनश्रीसूक्तेनचमत्तद्देवताप्र
काशकसूक्तेनमंत्रेणमूलमंत्रेणवामहाभिषेकंकुर्यात् ॥ सर्वभूषाधिकेदेवलोकलज्जानिवारणे ॥ मयोपपादितेतुभ्यंवाससीप्रतिगृह्यतां

तंयज्ञमितिवस्त्रं ॥ देवदेवनमस्तेस्तुत्राहिमांभवसागरात् ॥ ब्रह्मसूत्रंसोत्तरीयंगृहाणपुरुषोत्तम ॥ तस्माद्यज्ञात्सर्वहुतः संभृतमितियज्ञोप
वीतं ॥ श्रीखंडंचंदनंदिव्यंगंधाढ्यंसुमनोहरं ॥ विलेपनंसुरश्रेष्ठप्रीत्यर्थंप्रतिगृह्यतां ॥ तस्माद्यज्ञात्सर्वहुतऋ॰ गंधं॰ माल्यादीनिसुगंधीनिमाल
त्यादीनिवैप्रभो ॥ मयाहृतानिपुष्पाणिपूजार्थंप्रतिगृह्यतां ॥ तस्मादश्वेतिपुष्पं॰ ॥ वनस्पतिरसोद्भूतोगंधाढ्योगंधउत्तमः ॥ आघ्रेयःसर्वदेवानां
धूपोयंप्रतिगृह्यतां ॥ यत्पुरुषंव्यदधुरितिधूपं ॥ साज्यंचवर्त्तिसंयुक्तंवह्निनायोजितंमया ॥ दीपंगृहाणदेवेशत्रैलोक्यतिमिरापह ॥ ब्राह्म
णोस्येतिदीपं ॥ अन्नंचतुर्विधंस्वादुरसैःषड्भिःसमन्वितं ॥ भक्ष्यभोज्यसमायुक्तंनैवेद्यंप्रतिगृह्यताम् ॥ चंद्रमामनसेतिनैवेद्यम् ॥ इदंफ
लंमयादेवस्थापितंपुरतस्तव ॥ तेनमेसफलावाप्तिर्भवेज्जन्मनिजन्मनि ॥ फलेनफलितंसर्वंत्रैलोक्यंसचराचरं ॥ तस्मात्फलप्रदानेनसफला
श्चमनोरथाः ॥ फलं ॥ पूगीफलंमहद्दिव्यंनागवल्लीदलैर्युतं ॥ कर्पूरेलासमायुक्तंतांबूलंप्रतिगृह्यतां ॥ नाभ्याआसीदितितांबूलं ॥ हिरण्यग
र्भगर्भस्थंहेमबीजंविभावसोः ॥ अनंतपुण्यफलदमतःशांतिंप्रयच्छमे ॥ सप्तास्यासन्नितिदक्षिणा ॥ चंद्रादित्यौचधरणीविद्युदग्निस्तथैवच
त्वमेवसर्वज्योतींषिआर्त्तिक्यंप्रतिगृह्यताम् ॥ नीराजनम् ॥ नमस्तेपुंडरीकाक्षनमस्तेह्यमरप्रिय ॥ नमस्तेजगदानंददेवदेवनमोस्तुते

यज्ञेनयज्ञमिनिपुष्पांजलिः॥ अन्यान्यपितद्देवतासूक्तानिपठित्वा॥पुष्पांजलिः॥यानिकानिचपापानिब्रह्महत्यासमानिच॥तानिता-
निविनश्यंतिप्रदक्षिणपदेपदे॥ इतिप्रदक्षिणा॥ नमःसर्वहितार्थायजगदाधारहेतवे॥साष्टांगोयंप्रणामस्तेप्रयत्नेनमयाकृतः॥ इति
नमस्कारः॥ यन्मयाभक्तिसंयुक्तंपत्रंपुष्पंफलंजलं॥प्रकल्पितंचनैवेद्यंतद्गृहाणजगत्पते॥ ॥इतिसर्वपदार्थसमर्पणम्॥ ॥इतिसा
मान्यपूजाविधिः॥ ॥इतिश्रीमच्चित्तपावनकुलाब्धिसंभवघारोपनामकबल्लाळसूरिसूनुशंकरविरचितायांव्रतोद्यापनकौमुद्यांसर्वव्र
तसाधारणपरिभाषाप्रकरणंसमाप्तं॥ ॥अथव्रतोद्यापनानिलिख्यंते॥ ॥तत्रतावत्सर्वव्रतानांमध्येएकादश्याःप्राधान्या
त्प्रथममेकादशीव्रतोद्यापनमुच्यते॥ ॥अथएकादशीव्रतोद्यापनंचिकीर्षुः॥दशम्यांएकाशनः॥उक्तनियमवान्द्वितीयेह्निप्रातःनद्या
दौभस्मगोमयमृत्तिकास्नानपुरःसरंस्नात्वास्नानांगतर्पणंकृत्वा अहतेवाससीपरिधायतिलकादिधृत्वाशरीर शुद्ध्यर्थंब्रह्मकूर्चपुरःसरंपंच
गव्यंप्राश्यस्वगृह्यविधिनानित्यकर्मनिवर्त्यकूष्मांडहोमादिनाआत्मानंपावयित्वामध्यान्हेद्वित्राधिकांश्छुचीन् आध्यात्मविदःउक्तगुण
संपन्नान्द्विजान्उपवेश्यस्वयंदर्भेष्वासीनोधर्भान्धारयमाणःदेवब्राह्मणवंदनपुरःसरंसपत्नीकःप्रधानसंकल्पंकुर्यात्॥ तद्यथा॥ दे

शकालेोसंकीर्त्य ममअखिलपापक्षयपूर्वकंधर्मार्थकाममोक्षचतुर्विधपुरुषार्थसिद्धिद्वाराश्रीपरमेश्वरप्रीत्यर्थंअसुककामनयावामयाआचरितं
यत्शुक्लैकादशीव्रतंतथाकृष्णैकादशीव्रतंतत्संपूर्णफलावाप्तयेशुक्लकृष्णैकादशीव्रतोद्यापनाख्यंकर्मकरिष्ये॥ पृथक्पृथक्वाशुक्लकृष्णैकाद
श्योःसंकल्पःकार्यः पित्रादीनांचेत्तर्हितेषांऊहःकार्यः॥ ॥तदंगविहितंगणेशपूजनंपुण्याहवाचनंमातृकापूजनंनांदीश्राद्धंआचार्यब्रह्मस
दस्यर्त्विक्वरणंकरिष्यइतिसंकल्प्यस्वगृह्यविधिनाकुर्यात्॥ केचनगणेशपूजनपूर्वकंपुण्याहवाचनमेवेच्छंति॥ आचार्यवरणं॥ ॥
यजमानःस्वगोत्रादिउच्चार्य॥ असुकगोत्रंअसुकशर्माणंब्राह्मणंएकादशीव्रतोद्यापनाख्येकर्मणिविहितकर्मकर्तुंआचार्यंत्वामहंवृणे॥वृतो
स्मीतिप्रतिब्रूयात् आचार्यस्तुयथास्वर्गेशक्रादीनांबृहस्पतिः॥तथात्वंममयज्ञेस्मिन्आचार्योभवसुव्रत॥ ॥इतिप्रार्थ्य॥ ॥मधुप
र्कादिनापूजयेत्॥ सहैववा॥ ततःपूर्ववद्ब्राह्मणंवृत्वा॥ यथाचतुर्मुखोब्रह्मासर्ववेदविशारदः॥तथात्वंममयज्ञेस्मिन्ब्रह्माभवद्विजोत्तम॥
इतिसंप्रार्थ्यपूर्ववत् पूजयेत्॥ततःसदस्यं॥ त्वंनोगुरुःपितामातात्वंप्रभुस्त्वंपरायणं॥आपद्विमोक्षणार्थायसदस्यंत्वामहंवृणे॥वृत्वापूर्व
वत्पूजयेत्॥ततःऋत्विजः॥भगवन्सर्वकर्मज्ञसर्वधर्मभृतांवर॥विततेममयज्ञेस्मिन्ऋत्विक्त्वंभवसुव्रत॥वृत्वापूर्ववत्पूजयेत् प्रार्थयेच्च

अस्ययागस्यनिष्पत्तोभवंतोभ्यर्थितामया ॥ स्वःप्रसन्नेभ्यःकर्तव्यंकर्मेदंविधिपूर्वकमिति ॥ ततःआचार्यः संकल्पंकृत्वापूजासामग्रींगृहीत्वायजन
देशंगत्वा पूर्वोक्तप्रकारेणसर्वतोभद्रेब्रह्मादिदेवताआवाह्यसंपूज्यतदुपरिअक्षतपुंजेकेशवादिद्वादशनामांकितंअक्षतपूर्णताम्रमयंतंडुलपूर्णं
राजतपूर्णपात्रसहितंकलशंप्रतिष्ठाप्यतत्रअष्टदलपद्मेदेवताआवाहयेत् ॥ तद्यथा॥ प्रणवस्यपरब्रह्मऋषिः परमात्मादेवतादेवीगा-
यत्रीछंदः व्याहृतीनांक्रमेणजमदग्निभरद्वाजभृगवऋषयः॥ अग्निर्वायुःसूर्योदेवता ॥ देवीगायत्र्यादेव्युष्णिकदेवीबृहत्यः छंदांसिपुरुषा-
वाहनेविनियोगः ॥ तत्रकर्णिकायां ॥ भूःपुरुषंआवाहयामि ॥ भुवःपुरुषंआ॰ स्वःपुरुषं॰ भूर्भुवःस्वःपुरुषंआ॰ ॥ ततःसौवर्णप्रति-
मायां॥ सहस्रशीर्षानारायणःपुरुषोनुष्टुप् ॥ पुरुषावाह॰ सहस्रशीर्षा॰लक्ष्मीयुतंपुरुषंमध्येआवाहयामिस्थापया॰पूजया॰नमःपरितः अग्निं॰
इंद्रं॰ प्रजापतिं॰ विश्वान्देवान्॰ ब्रह्माणं॰ वसुदेवं॰ रामं॰ श्रियं॰ आवाह्यनाममंत्रेण ॥ ततःपूर्वदक्षिणपश्चिमोत्तरदलाभ्यांतरेषु ॥ स्त्रीच
तुःसहस्रसहितांरुक्मिणीं १ स्त्रीचतुःसहस्रसहितांसत्यभामां २ स्त्रीचतुःसहस्रसहितांजांबवतीं स्त्रीचतुःसहस्रसहितांकालिंदींचावा
ह्य ततःआग्नेयादिकोणेषु ॥ शंखं॰ चक्रं॰गदां॰पद्मं॰ आवाह्यपुरतः सामध्वनिशरीरस्त्वंवाहनंपरमेष्ठिनः विषपापहरोनित्यंअतःशांतिं

प्रयच्छमे ॥ इतिगरुडंआवाह्य ॥ परितः पूर्वादिक्रमेणइंद्राद्यष्टौलोकपालान्तत्तन्मंत्रैर्नाममंत्रैर्वा आवाह्य ॥ तदस्त्वमित्रा० ॥ गृहावैइतिप्र
तिष्ठाप्यपूर्वोक्तप्रकारेणपूजयेत् ॥ पुष्पानंतरंअंगपूजांकुर्यात् ॥ दामोदरायनमः पादौपूजयामि एवंसर्वत्र माधवायन० जानुनीपू० कामप
तये० गुह्यंपू० वामनाय० कटिंपू० पद्मनाभाय० नाभिं० विश्वमूर्त्तये० उदरंपूजया० ज्ञानगम्यायनमः हृदयं० श्रीकंठाय० कंठं० सहस्रबाहवे०
बाहूपूजया० योगिने० चक्षुषीपू० उरगाय० ललाटंपू० नाकसुरेश्वरा० नासांपू० श्रवणेशा० श्रवणौपू० सर्वकामदाय० शिखांपू० सहस्र-
शीर्षेनमः शिरःपूज० सर्वरूपिणेन० सर्वांगंपू० धूपं० दीपं० नैवेद्यांश्चचतुर्विंशत्संख्यान्दद्यादनुक्रमात् ॥ भक्त्याचतुर्विंशतिषुतिथिष्वपि
परंतप ॥ इच्छयाचतदादद्याद्यदेवोद्यापनंभवेत् ॥ मोदकान्लड्डुकान्चापिघृतपूरकमंडकान् ॥ सोहोलिकादिकंसारसेवासक्तुफलानिच ॥ वट
कान्पायसंदुग्धंशालिदध्योदनंतथा ॥ इंडीरिकाः पूरिकाश्च अपूपान्गुडमोदकान् ॥ तिलपिष्टंखंडपिष्टंलाजदुग्धंसशर्करं ॥ रंभाफलंचसघृ
तंमुद्गचूर्णगुडोदनं ॥ एवंक्रमेणनैवेद्यंदद्याद्देवस्यतुष्टये ॥ नमस्कारोत्तरंविशेषार्घ्यंदद्यात् ॥ तैजसपात्रेजलंनारीकेरंबीजपूरंअक्षतान् ॥ पुष्पं
चंदनादिफलंहिरण्यंनिक्षिप्यजानुभ्यांधरणींगत्वाइमंमंत्रमुदीरयेत् ॥ नारायणजगन्नाथलक्ष्मीकांतदयानिधे ॥ गृहाणार्घ्यंमयादत्तंव्रतसंपू

र्गिहेनवेइति मूलमंत्रेणपूजयेदितिवा ॥ ततःब्राह्मणान्संपूज्यगीतशास्त्रपुराणकथाश्रवणादिनाजागरपूर्वकंरात्रींनिनयेत् ॥ ततः प्रातः आ-
चार्यःनित्यकर्मनिवर्त्यमंडलदेवताःपंचोपचारैःसंपूज्य होममारभेत् ॥ तद्यथादेशकालौसंकीर्त्यशुक्लैकादशीव्रतोद्यापनांगभूतंविहितहवनं
करिष्यइतिसंकल्प्य ॥ समचतुरस्रंअरत्निमात्रंहोमानुसारेणअधिकंवाचतुरंगुलोत्सेधंसन्मृदास्थंडिलंविधायतत्रयजमानशाखयातदभावे
ऋत्विक्शाखयावाअग्निप्रणयनादिकंविदध्यात् ॥ तदुक्तंमानवसंहितायां ॥ कर्तुःशाखोक्तमार्गेणआचार्यस्याथवापुनः ॥ कुर्यादग्निप्रणय
नंहवनादिविधिंतथा ॥ ततः अन्वादध्यात् ॥ तद्यथा ॥ एकादशीव्रतोद्यापनहवने देवतापरिग्रहार्थमन्वाधानंकरिष्यइतिसंकल्प्य ॥अग्नआयाहि
हीत्यादियजुःशाखिनां ॥ अस्मिन्नन्वाहितेग्नौजातवेदसमित्यारभ्यचक्षुषीआज्येनेत्यंतमुक्त्वा ॥ अत्रप्रधानं ॥ पुरुषंपुरुषसूक्तेनप्रत्यृचंआ
ज्येनअमुकावृत्तिसंख्ययाअग्निंइंद्रंप्रजापतिंविश्वान्देवान्ब्रह्माणंचाज्येनएकवारंवसुदेवंरामंश्रियंविष्णुंनाममात्रेणघृताक्तपायसद्रव्येण
एकवारंपुनःविष्णुंविष्णोर्नुकमितिषण्मंत्रैःप्रत्यृचंघृताक्तपायसद्रव्येणअग्निंवायुंसूर्यंप्रजापतिंचएकवारंघृताक्तपायसद्रव्येणकेशवादिदा
मोदरांतंद्वादशदेवताःनाममंत्रैःएकवारंपायसद्रव्येणस्त्रीचतुःसहस्रसहितांरुक्मिणींस्त्रीचतुःसहस्रसहितांसत्यभामांस्त्रीचतुःसहस्र

सहितां जांबवतीं स्त्री चतुःसहस्रसहितां कालिंदीं शंखंचक्रंगदांपद्मंगरुडं इंद्राद्यष्टौलोकपालान् ब्रह्मादिमंडलदेवताश्च एकैकया आज्याहुत्या
यक्ष्ये शेषेण स्विष्टकृतमित्यादि पयसि स्थालीपाकविधिनाचरुंश्रपयित्वा ॥ पवित्रंतेविततमिति प्रापणं उद्धरेत् ॥ आज्यभागांतं कृत्वा ॥ प्र
धानदेवताहोमयेत् ॥ सहस्रशीर्षा॰१६ अग्नये॰ इंद्राय॰ प्रजापतये॰ विश्वेभ्योदेवेभ्यः॰ ब्रह्मणे इत्याज्येन ॥ अथघृताक्तपायसेन ॥
व सुदेवाय॰ रामाय॰ श्रियै॰ विष्णवे॰ विष्णोर्नुकं तदस्यप्रियं प्रतद्विष्णुरितिनिसृणांदीर्घतमाविष्णुस्त्रिष्टुप् हवनेविनि॰ विष्णोर्नुकं
तदस्य प्रियं॰ प्रतद्विष्णुः॰ परोमात्रयाविचक्रमे त्रिर्देवइतिनिसृणांवसिष्ठोविष्णुस्त्रिष्टुप् हवनेविनियोगः परोमात्रया॰ विचक्रमे॰ त्रिर्देवः॰
भूःस्वाहा भुवःस्वा॰ स्वःस्वाहा भूर्भुवःस्वःस्वाहा ॥ अथकेवलंपायसेन ॥ ॐ केशवायनमःस्वाहा ॥ प्रणवःस्वाहाकारःसर्वत्र ॥ नाराय॰
माधवाय॰ गोविंदाय॰ विष्णवे॰ मधुसूदना॰ त्रिविक्रमा॰ वामना॰ श्रीधराय॰ हृषीकेशाय॰ पद्मनाभाय॰ दामोदरायनमः॰ ॥ अथकेवला-
ज्येन स्त्रीचतुःसहस्रसहितायै रुक्मिण्यैनमःस्वाहा ॥ स्त्रीचतुःसहस्रसहितायै सत्यभामायैन॰ स्त्रीचतुःसहस्रसहितायै जांबवत्यैन॰
स्त्रीचतुःसहस्रसहितायै कालिंद्यैन॰ शंखाय॰ चक्राय॰ गदायै॰ पद्मायन॰ गरुडाय॰ इंद्राय॰ अग्न॰ यमाय॰ निर्ऋतये॰ वरुणाय॰ वायवे

सोमायनमः ईशानाय॰ तत्तन्मंत्रैर्वाहुत्वा ॥ ततः ब्रह्मादिमंडलदेवताः ॥ तत्तन्मंत्रैर्नाममंत्रैर्वा केवलाज्येनहोमयेत् ॐ ब्रह्मणेनमःस्वाहा इंद्रा-
य न॰ अग्नये॰ यमाय॰ निर्ऋतये॰ वरुणाय॰ वायवे॰ सोमाय॰ ईशानाय॰ अष्टवसुभ्यः ॥ एकादशरुद्रेभ्यः द्वादशादित्येभ्यः मरुद्भ्यः वि
श्वेभ्योदेवेभ्यः साध्येभ्योदेवेभ्यः अश्विभ्यां॰ स्कंदाय॰ विष्णवे॰ गणपतये॰ पितृभ्यः गंधर्वाप्सरसोभ्यः सप्तमातृभ्यः सर्पेभ्यः दुर्गायै॰ गं
गादिनदीभ्यः दक्षाय॰ नारायणाय॰ दुर्गायै॰ स्वधायै॰ मृत्यवे॰ शेषाय॰ समुद्रेभ्यः मरुद्भ्यः गणपतये पृथिव्यै॰ मेरवे॰ ऋग्वेदाय॰ यजु
र्वेदाय॰ सामवेदाय॰ अथर्ववे॰ वज्राय॰ शक्तये॰ दंडाय॰ खड्गाय॰ पाशाय॰ अंकुशाय॰ गदायै॰ त्रिशूलाय॰ ऐरावताय॰ मेषाय॰
महिषाय॰ प्रेताय॰ मकराय॰ एणाय॰ शिबिकायै॰ वृषाय॰ गौतमाय॰ भरद्वाजाय॰ विश्वामित्रा॰ कश्यपाय॰ जमदग्नये॰ अत्रये॰ वसिष्ठाय॰
अरुंधत्यै॰ सूर्याय॰ सोमाय॰ भौमाय॰ बुधाय॰ गुरवे॰ शुक्राय॰ शनैश्चराय॰ राहवे॰ केतवे॰ ऐं द्र्यै॰ कौमार्यै॰ ब्राह्म्यै॰ वाराह्यै॰ चामुंडायै॰ वैष्ण
व्यै॰ माहेश्वर्यै॰ वैनायक्यै॰ ततः स्विष्टकृतं ॥ ततः यजमानः देवाय प्रापणं निवेदयेत् ॥ अनेनमंत्रेण ॥ त्वामेकमाद्यंपुरुषंपुराणंनारायणंविश्व
सृजंयजामः ॥ त्वय्येषभागोविहितोविधेयोगृहाणहव्यंजगतामधीश ॥ इतिनिवेद्यतिष्ठेत् ॥ ततः अग्निंत्रिवारंचतुर्वारंवाप्रदक्षिणीकृत्य ॥

आशिषोगृहीत्वाव्रतसंपूर्णतांवाचयेत् ॥ जपच्छिद्रंतपश्छिद्रंयच्छिद्रंव्रतकर्मणि ॥ सर्वंभवतुमेछिद्रंब्राह्मणानांप्रसादतः ॥ ॥ इतिसं-
प्रार्थ्य ॥ ॥ अछिद्रंभवतुतेव्रतमितिब्राह्मणाःप्रतिवदेयुः ॥ ततः तांनमस्कृत्य ॥ इष्टजनैः सोत्सवःभुंजीत ॥ ॥ इतिशुक्लैकादशीव्रतो
द्यापनं ॥ ॥ अथकृष्णैकादशीव्रतोद्यापनं ॥ ॥ यजमानःदेशकालौसंकीर्त्य आत्मनःपापक्षयपूर्वकंएकविंशतिपुरुषान्उद्धर्तुका
मनयालक्ष्मीनारायणप्रीतयेच आचरितस्यकृष्णैकादशीव्रतस्यसांगतासिद्ध्यर्थंकृष्णैकादशीव्रतोद्यापनंकरिष्ये ॥ इतिसंकल्प्य
पूर्वोक्तप्रकारेणगणेशपूजामारभ्यआचार्यवरणांतंकर्मकुर्यात् ॥ ततःआचार्यःपूर्वोक्तप्रकारेणसर्वतोभद्रेब्रह्मादिदेवताआवाह्यसंपूज्य
तदुपरिसंकर्षणादिद्वादशनामांकितंतिलपूर्णराजतपूर्णपात्रयुतंकलशंप्रतिष्ठाप्य ॥ तत्र अष्टदलंविलिख्यकर्णिकायां ॥ भूःपुरुषमित्याद्या
वाह्य ॥ मध्येसहस्रशीर्षेतिसौवर्णींलक्ष्मीनारायणप्रतिमांआवाह्य ॥ ततःपूर्वादिदिक्षुप्रत्येकंचतुःसहस्रस्त्रीसहितांरुक्मिणींसत्यभा-
मांजांबवतींकालिंदींचावाह्य ॥ ततःआग्नेय्यादिविदिक्षुगणपतिंदुर्गांक्षेत्राधिपतिंवास्तोष्पतिंचावाह्य ॥ पुनःपूर्वादिदिक्षु ॥ ब्रह्मजज्ञान-
मितिब्रह्माणं ॥ विष्णोर्नुकमितिविष्णुं ॥ बलभद्रं ॥ प्रद्युम्नं त्र्यंबकमितित्र्यंबकं ॥ वसुदेवं रामं अनिरुद्धंवामभागे श्रियंपुरतः राजतं

गरुडं ॥ पुनः आग्नेय्यादिकोणेषु ॥ शंखं० चक्रं० गदां० पद्मं० पुनः पूर्वादिक्रमेण विमलां० उत्कर्षिणीं० ज्ञानां० क्रियां० योगां० प्रह्वीं० सत्यां० ईशा
नां ॥ पृष्ठभागे अनुग्रहां पुनः पूर्वादिक्रमेण इंद्राद्यष्टौलोकपालान् तत्तन्मंत्रैर्नाममंत्रैर्वा आवाह्य पूर्वोक्तप्रकारेण षोडशोपचारैः संपूज्य ॥
पुराणपठनादिना रात्रिं निनयेत् ॥ प्रातः पुनः पीठदेवताः संपूज्य ॥ पूर्वोक्तप्रकारेण अग्निं प्रतिष्ठाप्य अन्वादध्यात् ॥ अत्र प्रधानं संकर्षणादिष्ट-
ध्यांतद्वादशदेवताः घृताक्तपायसेन एकैकयाहुत्या पुरुषं विष्णुं अष्टोत्तरसहस्रसंख्याकघृताक्ततिलाहुतिभिः अष्टोत्तरशतसंख्याभिर्वा अ-
ग्निं वायुं सूर्यं प्रजापतिं प्रत्येकं स्त्रीचतुःसहस्रसहितां रुक्मिणीं सत्यभामां जांबवतीं कालिंदीं एकवारं पायसेन वसुदेवं रामं श्रियं विष्णु-
विष्णोर्नुकमिति षण्मंत्रैः प्रत्यृचं पायसेन गणपतिं दुर्गां क्षेत्राधिपतिं वास्तोष्पतिं ब्रह्माणं बलभद्रं प्रद्युम्नं त्र्यंबकं अनिरुद्धं गरुडं शंखं चक्रं गदां
पद्मं विमलाद्याः अनुग्रहांता देवताः इंद्राद्यष्टौलोकपालान् ब्रह्मादिमंडलदेवताश्च एकैकया आज्याहुत्या यक्ष्ये शेषेण स्विष्टकृतमित्यादि प्रय
सिस्थालीपाकविधिना चरुं श्रपयित्वा ॥ पवित्रं ते विततमिति मंत्रेण प्रापणं उद्धृत्य आज्यभागांतं कृत्वा प्रधानदेवताहोमयेत् ॥ ॐ संक
र्षणाय नमः स्वाहा ॥ वासुदेवाय० प्रद्युम्नाय० अनिरुद्धाय० पुरुषोत्तमाय० अधोक्ष० नारसिंहाय० अच्युताय० जनार्दनाय० उपेंद्राय० हरये०

श्रीकृष्णाय॰ घृताक्तपायसेनएकवारं॥ सहस्रशीर्षा॰ घृताक्ततिलैः भूःस्वाहा भुवःस्वाहा स्वःस्वाहा भूर्भुवःस्वःस्वाहा प्रत्येकंस्त्रीस
हस्रसहितायैरुक्मिण्यै सत्यभामायै जांबवत्यै कालिंद्यै वसुदेवाय॰ रामाय॰ श्रियै॰ विष्णोर्नुकं॰ तदस्यप्रि॰ प्रतद्विष्णु॰ परोमात्रया॰
विचक्रमे॰ त्रिर्देवः॰ केवलपायसेन अथाज्येन गणपतये॰ दुर्गायै॰ क्षेत्राधिपतये॰ वास्तोष्पतये॰ तत्तन्मंत्रैर्वा॰ ब्रह्मणेबलभद्राय॰ प्र
द्युम्नाय॰ त्र्यंबकाय॰ अनिरुद्धाय॰ गरुडाय॰ शंखाय॰ चक्राय॰ गदायै॰ पद्माय॰ विमलायै॰ उत्कर्षिण्यै॰ ज्ञानायै॰ क्रियायै॰ योगायै॰ प्र
व्हायै॰सत्यायै॰ ईशानायै॰ अनुग्रहायै॰ इंद्रायेत्यादिलोकपालेभ्यः॰ ब्रह्मादिमंडलदेवताभ्यः॰ ॥इतिहुत्वा॥ ततःस्विष्टकृतंहुत्वा॥ ॥
ततःपूर्वोक्तप्रकारेणदेवायप्रापण निवेदनमारभ्यप्रायश्चित्त होमांतंकर्मनिर्वर्त्य आचार्यायकृष्णांगांदत्वाद्वादशब्राह्मणान्संकर्षणादिकृ
ष्णांतद्वादशनामभिःसंपूज्यतेभ्यःदक्षिणादियुतान्तिलपूर्णान्संकर्षणादिद्वादशनामांकितान्कलशान्दद्यात्॥ पीठंदत्वासदन्नेनब्रा
ह्मणान्यथाविभवंसंभोज्यदक्षिणादिभिःप्रतोष्यव्रतसंपूर्णतांवाचयित्वा॥आशिषोगृहीत्वा॥ इष्टजनैःसहभुंजीत॥ ॥इतिकृष्णै
कादशीव्रतोद्यापनंसमाप्तम्॥ ॥इदंशुद्धकृष्णैकादशीव्रतोद्यापनंबौधायनसूत्रानुसारेणलिखितम्॥ पुराणोक्तंतुसर्वत्रोभद्रेत्र

ह्माादिदेवतास्थापनपूर्वकंकलशंप्रतिष्ठाप्य ॥ तत्राष्टदलपद्मेसुवर्णघटितलक्ष्मीनारायणप्रतिमांइदंविष्णुरितिमंत्रेणप्रतिष्ठाप्यपुरतः ॥ राज
तंगरुडंपरितःलोकपालाष्टकंसंस्थाप्यपुरुषसूक्तेनषोडशोपचारैःसंपूज्य ॥ पुराणपठनादिनारात्रिंनिनयेत् ॥ प्रातःअग्निप्रतिष्ठांतंकृत्वा ॥
इदंविष्णुरितिमंत्रेणघृताक्तपायसेनघृताक्ततिलैश्चप्रत्येकंअष्टोत्तरसहस्रंशतंवाहुत्वा ॥ कपिलांगांदत्त्वा ॥ चतुर्विंशतिब्राह्मणान्केशवा
दिनामभिःसंपूज्य ॥ केशवनामांकितांश्चतुर्विंशतिकलशान्पक्वान्नपूरितान्वस्त्रदक्षिणायुतान्दद्यात् इति उद्यापनंतुप्रबोधिन्यांमा
र्गशीर्षेभीमतिथौमाघेवैशाखेवित्तसमृद्धौशुभतिथौवाकुर्यात् ॥ ॥ इतिपाद्मात् ॥ ॥ इतिश्रीमच्छांकर्यांव्रतोद्यापनकौमुद्यांए
कादशीव्रतम् ॥ अथप्रतिपत्व्रतानिलिख्यंते ॥ चैत्रप्रतिपदिआरोग्यव्रतम् ॥ ॥ भविष्ये ॥ ॥ तत्रसंवत्सरावसानेपंचद
श्यांउपोषितः ॥ प्रतिपदिप्रातःस्नात्वातिथ्यादिसंकीर्त्यआत्मनःआरोग्यादिप्राप्तिकामनयासूर्यप्रीत्यर्थंआरोग्यप्रतिपद्व्रतंकरिष्यइति-
संकल्प्य ॥ ॥ पंचवर्णनिर्मितपद्मेभास्करंसांगंसंपूज्य ॥ पायसाद्युपहारंनिवेद्यसदन्नेनब्राह्मणान्संतर्प्यदिनचतुर्थभागेस्वयंसघृतं
एकमेवग्रासंभक्षयित्वा ॥ अवशिष्टान्नंत्यजेत् ॥ ब्राह्मणानुमत्यावाघृतवर्ज्यंभुंजीत ॥ एवंत्रयोदशवर्षंकृत्वा ॥ उद्यापनप्रकारेण

अंतेसौवर्णीसूर्यप्रतिमांसंपूज्य ब्राह्मणान्संभोज्यव्रतपूर्तयेगांब्राह्मणायदद्यात् ॥ ॥इतिआरोग्यव्रतम् ॥ ॥अथविद्याव्रतम्
स्कांदे ॥ ॥चैत्रशुद्धप्रतिपदितिथ्यादिसंकीर्त्य आत्मनःसांगविद्याप्राप्तिकामोब्रह्मप्रीत्यर्थंविद्याव्रतंकरिष्ये इतिसंकल्प्य ॥ ॥
पंचवर्णरचितेऽष्टपत्रपद्मेकर्णिकायां ॥ ब्रह्मजज्ञानमितिब्राह्मणं ॥ पूर्वपत्रे ऋग्वेदं दक्षिणेयजुर्वेदं पश्चिमेसामवेदं उत्तरेअथ
र्ववेदं आग्नेये अंगानि नैर्ऋत्येधर्मशास्त्राणि पुराणानिवायव्ये ईशान्ये न्यायविस्तरान् तत्तन्मंत्रैःआवाह्यसंपूजयेत् ब्राह्मणान्
संभोज्य स्वयंउपवासंकुर्यात् ॥ एवंद्वादशमासस्थशुक्लप्रतिपत्सुकुर्यात् अंतेसर्वतोभद्रस्थकलशेसौवर्णंब्रह्माणंसपूज्यगांदत्वावि-
प्रान्सदन्नेनभोजयेत् ॥ स्वयमपिआशिषोगृहीत्वाभुंजीयादिति ॥ ॥इतिविद्याव्रतम् ॥ अथरोटकसोमवारव्रतंभवि-
ष्ये ॥ ॥श्रावणशुक्लप्रतिपत्सोमवारयुतायदातदाकार्यंप्रथमसोमवासरेवासार्धमासत्रयंकार्यं ॥ अधिकसौभाग्यसंपूर्णसंप
त्तिकामः सोमेशप्रीत्यर्थंरोटकसोमवारव्रतंकरिष्ये इतिसंकल्प्य कार्तिकशुक्लचतुर्दशीपर्यंतंप्रत्यहंबिल्वदलैःसांबंसंपूज्य कार्ति
कशुक्लचतुर्दश्यांउपोष्य ॥ रात्रौदेवंपंचामृतपुरस्सरंनानापुष्पादिभिःसंपूज्य ॥ प्रातःपुरुषाहारसंमितरोटकपंचकंकृत्वा द्वौब्राह्मणा

यएकंदेवायद्द्यो आत्मने एवंवर्षपंचकंकृत्वा अंतेराजतंसांबंउद्यापनविधिनासंपूज्यहेमरौप्यरोटकौयथाशक्तिकृत्वाआचार्यंसंपूज्यव्रत
पूर्तयेतस्मैदत्वागांचदत्वाब्राह्मणान्भोजयेदिति॥ ॥इतिरोटकसोमवारव्रतम्॥ ॥इतिश्रीमच्छंकर्यांप्रतिपद्व्रतानि॥ ॥
अथद्वितीयाव्रतानि॥ तत्रभविष्ये॥ कार्त्तिकशुक्लद्वितीयायमद्वितीयासाअपराण्हव्यापिनीग्राह्या दिनद्वयव्याप्तौअव्याप्तौपरैव
प्रातःसाभ्यंगंस्नात्वा॥ आत्मनःअवैधव्यभ्रात्रायुष्यवृद्धिप्राप्तिकामनयायमपूजांकरिष्येइतिसंकल्प्य॥ पटेचंदनादिनायमंचित्रगु
प्तंयमदूतांश्चविलिख्यपूजयेत् ततःभ्रातृभगिनीभिःयमायअर्घ्योदेयः॥ अर्घ्यमंत्रस्तु॥ एह्येहिमामंबुजपाशहस्तयमांतकालादि
भिरन्वितेश॥ भ्रातृद्वितीयांकृतदेवपूजांगृहाणचार्घ्यंभगवन्नमस्ते॥ धर्मराजनमस्तुभ्यंनमस्तेयमुनाग्रज॥त्राहिमांकिंकरैःसा-
र्द्धंसूर्यपुत्रनमोस्तुते॥ भ्राताभगिनींप्रतोष्यवस्त्रादिनातद्गृहेभुक्त्वाततःभगिनीआशिषःप्रार्थयेत॥ मार्कंडेयमहाभागसप्तकल्पांतजी
वन॥चिरंजीवीयथात्वंहितथामेभ्रातरंकुर्विति॥ ॥अथस्कंदकृतफलं॥ भविष्ये श्रावणशुद्धद्वितीयायांभृगुवारयुतायांचं
द्रोदयव्यापिन्यांकार्यं॥व्रतग्रहणंदेशकालौसंकीर्त्यममअखिलपापक्षयपूर्वकपुत्रपौत्रसौभाग्याद्यभिवृद्धिद्वारालक्ष्मीनारायणप्री-

तयेवर्षत्रयाचरितस्यस्कृतफलव्रतस्यसंपूर्णतासिद्ध्येनउद्यापनाख्यंकर्मकरिष्ये॥ ॥इतिसंकल्प्य॥ ॥पूर्वोक्तप्रकारेणआचार्यः
सर्वतोभद्रस्यकलशेसौवर्णविष्णोर्नुकमितिमंत्रेणनारायणंसक्तुमिवतितउनेतिलक्ष्मींचसंपूज्यस्कृवर्णफलयुतंवंशपात्रस्थवाणकं
पुरतःस्थाप्यरात्रिंनिनयेत्॥ प्रातःअग्निंप्रतिष्ठाप्यअन्वादध्यात्॥ नारायणंलक्ष्मींचतिलसर्पिर्भ्यांअष्टोत्तरशतसंख्याकाहुतिभिः
प्रतिद्रव्यंब्रह्मादिमंडलदेवताश्चएकैकयाःज्याहुत्यायक्ष्ये॥ स्थापनमंत्राभ्यांहोमयेत्॥ ततःआचार्यंसंपूज्यवायनंदद्यात्॥ पंचामृ
तयुतानिगोधूमानिउदुंबरफलसदृशानिषष्ट्यधिकशतत्रयपरिमितानितावंतिसौवर्णानिचसवस्त्राणिदक्षिणासौभाग्यद्रव्ययुतानिस्कृ
कृतफलयुतानिवंशपात्रस्थानिपायसपूर्णकांस्यपात्रसहितानिअनेनमंत्रेणदद्यात्॥ ॥पुत्रपौत्रसमृद्ध्यर्थंसौभाग्यारोग्यसिद्धये॥
वाणकंसंप्रदास्यामिव्रतसंपूर्णहेतवे॥ लक्ष्मीनारायणोदेवअस्मात्संसारसागरात्॥ रक्षतुसकलात्पापात्पुण्यंसर्वंददातुच॥ श्रावणेच
द्वितीयायांस्कृभद्रार्चितमाधव॥ स्कृतदानफलंमेद्यसफलाश्चमनोरथाः॥ श्रीकृष्णःप्रतिगृण्हातिश्रीकृष्णोवैददातिच॥ श्री
कृष्णस्तारकोभाभ्यांश्रीकृष्णःप्रीयतामिति॥ ततःकपिलांगांदत्वाचतुर्विंशतिब्राह्मणान्सदन्नेनसंतर्प्यआशिषोगृहीत्वास्व

यंभुंजीत ॥ ॥ अथभविष्येबालचंद्रव्रतम् ॥ ॥ मार्गशीर्षशुद्धद्वितीयायांचंद्रोदयव्यापिन्यांकार्यम् ॥ देशकालौसंकीर्त्यआ-
त्मनः अवैधव्यपुत्रपौत्रसौभाग्यलक्ष्मीप्राप्तिकामनयासोमराजप्रीत्यर्थंद्वादशवर्षपर्यंतमाचरितंयद्बालचंद्रव्रतंतस्यसंपूर्णतासिद्ध
येतदुद्यापनाख्यंकर्मकरिष्ये ॥ ततः कृताचार्यःसर्वतोभद्रस्थकलशेसौवर्णंआप्यायस्वेतिमंत्रेणविधुंसंपूज्य ॥ क्षीरोदार्णवसंभू
तलक्ष्मीबंधोनिशाकर ॥ गृहाणार्घ्यंमयादत्तंरोहिण्यासहितःशशिन् ॥ इतिअष्टांगार्घ्यंदत्वाप्रार्थयेत् ॥ सोमराजनमस्तुभ्यं
क्षीराब्धिमथनोद्भव ॥ व्रतेनक्रियमाणेनतुष्टोभवनिशापते ॥ प्रातःअग्निंप्रतिष्ठाप्यअन्वादध्यात् ॥ सोमराजंपलाशसमित्ति
लयवाज्यैरष्टोत्तरशतसंख्याकाहुतिभिःप्रतिद्रव्यंब्रह्मादिदेवताश्चएकैकया आज्याहुत्यायक्ष्ये ॥ स्थापनमंत्रेणहुत्वागांवायनंचद
त्वाब्राह्मणान्भोजयेदिति ॥ ॥ इतिव्रतोद्यापनकौमुद्यांद्वितीयाव्रतानिसमाप्तानि ॥ ॥ अथतृतीयाव्रतानि ॥ ॥ भविष्ये
पूर्वाण्हव्यापिन्यांचैत्रशुद्धतृतीयायांसौभाग्यशयनव्रतंद्वादशअष्टौसप्तवावर्षाणिकार्यम् ॥ प्रातःशुक्लतिलैःस्नात्वादेशकालौसं-
कीर्त्यआत्मनःभर्त्रासहएकशय्यासनशयनभोगसौभाग्यपुत्रपौत्राद्यभिप्राप्तयेउमामहेश्वरप्रीत्यर्थंसौभाग्यशयनव्रतंकरिष्ये ॥ ॥

इतिसंकल्प्य ॥ उमामहेश्वरयोः प्रतिमांसौवर्णींपूजाविधिनापंचामृतपुरःसरंतत्तन्मंत्राभ्यांपीठेसंपूज्य ॥ ॥ अंगपूजामारभेत्
पाटलायैनमः शिवायन॰ पादौपूजयामि एवंसर्वत्र जयायै॰ शिवाय॰ गुल्फौ॰ त्रिगुणाय॰ भवान्यै॰ जंघायुग्मं॰ रुद्राय॰ जयायै॰ जा
नुनी॰ हरिकेशाय॰ वरदायै॰ ऊरू॰ ईशाय॰ रत्यै॰ कटी॰ शूलिने॰ कोटरायै॰ कुक्षिद्वयं॰ शूलपाणये॰ मंगलायै॰ उदरं॰ सर्वात्मने॰ ईशा
न्यै॰ कुचद्वयं॰ वेदात्मने॰ रुद्राण्यै॰ कंठं॰ त्रिपुरघ्नाय॰ विश्वायै॰ करद्वयं॰ हराय॰ भवान्यै॰ नासायुग्मं॰ उग्राय॰ ललितायै॰ भ्रूयुग्मं॰
शर्वाय॰ देव्यै॰ कर्णद्वयं॰ श्रीकंठाय॰ शिवायै॰ केशान्॰ भीमाय॰ सर्वात्मन्यै॰ शिरः पू॰ इतिसंपूज्य पुरतः सौभाग्याष्टकं
स्थापयेत् घृतनिष्पावकुसुंभक्षीरजीरकतृणराजइक्षुलवणधान्यानिचैत्रेगोशृंगोदकंप्राश्यभूमौस्वपेत् ॥ पुनःप्रभातेसंपूज्यदेवं
द्विजदांपत्यंवस्त्रादिनासंपूज्य ॥ सौभाग्याष्टकयुतंस्वर्णप्रतिमाद्वयंसदक्षिणाकंललिताप्रीयतामितिवदन्ब्राह्मणायदद्यात् ॥
एवंप्रतिमासंतृतीयायां ॥ प्राशनेदानमंत्रेचपुष्पेचविशेषः ॥ चैत्रादिद्वादशमासेषुक्रमेणगोशृंगोदकं ॥ गोमयं ॥ मंदारकुसुमं ॥ बि
ल्वपत्रं ॥ दधि कुशोदकं क्षीरं पृषदाज्यं गोमूत्रं घृतं कृष्णतिलान् पंचगव्यं ललिता॰ विजया॰ भद्रा॰ भवानी॰ कुमुदा॰ शि-

वाय॰ वास्तुदेवी॰ गौरी॰ मंगला॰ कमला॰ सती॰ उमा॰ पुष्पाणि क्रमेण॰ मल्लिका॰ अशोकं॰ कमलं॰ कौसुंभं॰ नीलोत्पलं॰ माल-
ती॰ कुब्जकं॰ करवीरं॰ बाणं॰ चंपकं॰ सिंदूरवारं॰ जपा॰ एतेषां अभावे करवीरं सर्वत्र ॥ व्रतांगे सर्वोपस्करयुते शयने हैमं उमामहेश्व
रंगोयुग्मं च हैमं पुरतः संपूज्य॥ ततो वस्त्रादिना दंपती संपूज्य दद्यात् ॥ सुखसंतानवृद्ध्यर्थं शयनं ते द्विजोत्तम॥ ददामि व्रतपूर्त्यर्थं प्री
येतां मे ह्युमेश्वरौ॥ इति अन्या अपि दंपतीर्यथाविभवं संपूज्य ॥ गां च सवत्सां दत्त्वा ब्राह्मणान् सदन्नेन संतर्प्य आशिषो गृहीत्वा स्वयं भुं
जीत ॥ ॥ अथ स्कांदे मध्यान्हव्यापिन्यां चैत्रशुक्लतृतीयायां अरुंधतीव्रतम् ॥ ॥ तिथ्यादि संकीर्त्य आत्मनः अवैधव्यसौभा
ग्यपुत्रपौत्रावाप्तिकामनया अरुंधतीव्रतं करिष्ये॥ पूर्वं त्रिरात्रोपोषितो नक्ताशी वा इह नाचार्यः सर्वतोभद्रमंडले जीरकपुंजे लवणा
न्वितवस्त्रयुग्मवेष्टितकलशे हैमे वसिष्ठारुंधतीप्रतिमे नाममंत्रेण प्रतिष्ठाप्य उपचारैः संपूज्य॥ ॥ अंगपूजां कुर्यात् ॥ वेदवंद्यै नमः
पादौ पूजयामि लोकवंद्यै न॰ जानुनी॰ संपत्तिदायै॰ कटिं॰ गंभीरनाभ्यै॰ नाभिं॰ लोकधात्र्यै॰ स्तनौ॰ जगद्धात्र्यै॰ कंठं॰ शांत्यै॰ बा
हू॰ वरदायै॰ हस्तौ॰ धृत्यै॰ मुखं॰ अरुंधत्यै॰ शिरः पूज॰ वसिष्ठप्रियायै॰ सर्वांगं॰ ॥ उत्तरार्घ्यं ॥ अरुंधति महाभागे वसिष्ठप्रियवा

दिनि ॥ सौभाग्यंदेहिमेदेविगृहाणार्घ्यंनमोस्तुते ॥ ततःनमस्कारः ॥ पुत्रान्देहिधनंदेहिसौभाग्यंदेहिसुव्रते ॥ अन्यांश्चसर्वकामांश्च
देहिदेविनमोस्तुते ॥ ततःसुवासिनीःसंपूज्य ॥ प्रातःहोमंकुर्यात् ॥ अत्रप्रधानं ॥ अरुंधतींसमिच्चिलाज्याहुतिभिःप्रतिद्रव्यंअष्टोत्तरश
तसंख्याकाभिः ॥ ब्रह्मादिदेवताश्चैकैकाज्याहुत्यायक्ष्ये ॥ ततःहोमशेषंसमाप्य ॥ आचार्यंसंपूज्यघृतपूरितकांस्यपात्रंसदीपंपं
ठंचदत्वा ॥ चतुर्विंशतिद्वादशयथाशक्तिवामिथुनानिसंपूज्य ॥ मोदकपोलिकापूरिकावटकघृतपाचितपक्वान्नादिपूरितंसवस्त्रंसम्
र्पवायनंतेभ्योदत्वागांचदद्यात् ॥ अथभविष्येमुहूर्तमात्रेपिपरविद्धायांश्रावणशुक्लतृतीयायांस्वर्णगौरीव्रतम् प्रातःशुक्लतिलैःस्ना–
त्वा आत्मनःसौभाग्यादिपुत्रपौत्रसंपत्तिप्राप्तिकामनयाचरितस्वर्णगौरीव्रतोद्यापनंकरिष्ये वृताचार्यः उक्तप्रकारेणलिंगभद्रे
षोडशनमस्कारमंत्रेणनाममंत्रेणवाहोमः ॥ पलताम्रमयतिलपूरितपूर्णपात्रयुतेमृन्मयेकलशेहैमेहरगौरीप्रतिमेत्र्यंबकं ॥ गौरीर्मिमा
येतिमंत्राभ्यांसंपूज्यपुराणपठनादिनारात्रिंनिनीय ॥ प्रातरग्निंप्रतिष्ठाप्यअन्वादध्यात् ॥ उमामहेश्वरौतिलयवाज्याहुतिभिःप्रतिद्रव्यं
अष्टोत्तरशतसंख्याकाभिर्ब्रह्मादिदेवताश्चैकैकयाज्याहुत्यायक्ष्ये ॥ ततःआचार्यायगांदत्वाषोडशदंपतीःसंपूज्यवंशपात्रस्थषोडश

विधषोडशसंख्याकपक्वान्नसंयुतंवायनंतेभ्योदत्वादक्षिणादिभिःसंतोष्य ॥ ॥आशिषोगृण्हीयात् ॥ ॥ ॥
अथभविष्यस्कंदयोर्मुहूर्तमात्रेपिपरविद्धायांभाद्रशुक्लतृतीयायांहरितालिकाव्रतम् ॥ ॥तिथ्याद्युल्लिख्यममसमस्तपापक्षयपूर्वक
सप्तजन्मसौभाग्यादिविविधभोगप्राप्तिद्वाराउमामहेश्वरप्रीत्यर्थंआचरितहरितालिकाव्रतोद्यापनंकरिष्ये ॥ ततःवृताचार्यः ॥
उक्तविधिनालिंगतोभद्रेद्रोणपरिमितव्रीहिस्थकलशेराजतंशिवंहैमींगौरींपुरतःराजतंवृषं ॥ उक्तमंत्रैःप्रतिष्ठाप्यसंपूजयेत् ॥
तत्रमंत्रः ॥ मंदारमालाकुलितालकायैकपालमालांकितशेखराय ॥ दिव्यांबरायैचदिगंबरायनमःशिवायैचनमःशिवाय ॥ तत्तन्नं
त्रैर्वातततःप्रार्थयेत् ॥ नमःशिवायसांबायपंचवक्त्रायशूलिने ॥ नंदिभृंगिमहाकालगणयुक्तायशंभवे ॥ शिवायैहरकांतायैप्रकृत्यैसृ
ष्टिहेतवे ॥ नमस्तेब्रह्मरूपिण्येजगद्धात्र्यैनमोनमः ॥ येनकामेनदेवित्वंपूजितासिमहेश्वरी ॥ तंपूर्णंकुरुमेकामंसौभाग्यंचप्रयच्छ
मे ॥ ततःसुवासिनीभिःसंपूज्यरात्रिंनिनयेत् ॥ प्रातःअग्निंप्रतिष्ठाप्यअन्वादध्यात् ॥प्रधानंउमामहेश्वरंप्रतिद्रव्यंअष्टोत्तरशत-
संख्याकाभिःतिलयवाज्याहुतिभिःब्रह्मादिदेवताःपरिवारदेवताश्च एकैकयाऽज्याहुत्यायक्ष्ये ततःसंपूजिताचार्यायगांदत्वाषो

डशाष्टौवायुग्मानिसंपूज्य सौभाग्यद्रव्यवस्त्रदक्षिणायुतानिसम्पूर्णाणिषोडशवायनानिदद्यात् तत्रमंत्रः ॥ सौभाग्यारोग्यकामानां
सर्वसंपत्समृद्धये ॥ गौरीगिरीशतुष्ट्यर्थंवायनंतेददाम्यहं ॥ ॥ अथहस्तगौरीव्रतम् भविष्ये हस्तऋक्षगतेसूर्येत्रयोदशवर्षात्म
कंहस्तगौरीव्रतं तिथ्यादिसंकीर्त्य आत्मनः सकलदुःखनाशसौभाग्यसुखावाप्तिद्वारागौरीप्रीत्यर्थंआचरितहस्तगौरीव्रतपूर्णतासिद्ध
येतदुद्यापनाख्यंकर्मकरिष्ये ॥ ॥ वृताचार्यः ॥ लिंगतोभद्रेउक्तप्रकारेणकलशेकांचनगजेगौरींहरंगणेशंचसौवर्णसुवर्ण
पुष्पादिनातत्तन्मंत्रैः संपूज्यसुवासिनीः संपूजयेत् ॥ अग्निंप्रतिष्ठाप्यअन्वादध्यात् गौरींहरंगणेशंचअष्टोत्तरशततिलाज्याहुति
भिः ब्रह्मादिदेवताः एकैकया ऽज्याहुत्यायक्ष्ये ॥ वायनंत्रयोदशविधत्रयोदशसंख्याकपक्वान्नपूरितंसौवर्णपात्रेवैणवेवाकृत्वात्रयो
दशदंपतीः सुवासिनीर्वासंपूज्यतेभ्योदद्यात् ॥ तत्रमंत्रः पक्वान्नपूरितंविप्रव्रतसंपूर्णहेतवे ॥ वायनंतेप्रयच्छामिगौरीगिरि-
शतुष्टये ॥ गांदद्यात् ॥ ॥ अथकोटीश्वरीव्रतं ॥ ॥ भाद्रपदशुक्लतृतीयायांभविष्ये ॥ ॥ तच्चवर्षचतुष्टयंकार्यम् ॥
तत्रविधिः ॥ ॥ आत्मनः दुर्भगत्वनाशनसुभगत्वप्राप्तिकामनयागौरीप्रीत्यर्थंकोटीश्वरीव्रतंकरिष्ये ॥ अखंडानांतंडुलानां-

तिलानांवा लक्षंएकंपयसिपत्क्वातदन्नेनदेवींनिर्मायोक्तप्रकारेणपीठेसंपूज्यरक्तवस्त्रंदत्वाविशेषपूजांकुर्यात् ॥ तत्रमंत्रः ॥नमोनु
गस्तेदेवेशिलक्षेश्वरिनमोस्तुते॥कोटीश्वरिनमस्तुभ्यंनमस्तेहरिवल्लभे॥ ततोऽर्घ्यं नमोलक्षेश्वरिदेवि कोटीश्वरिनमोस्तु
ते ॥गृहाणार्घ्यंमयादत्तंदुर्गेदेविनमोस्तुते॥ ततः सुवासिनीः संपूजयेत् व्रतांतेगांचदद्यात् ॥ ॥अथभविष्येचंद्रोदयव्यापिन्यां
भाद्रकृष्णतृतीयायांबृहद्गौरीव्रतम् ॥ तच्चवर्षपंचकंकार्यं ॥ ॥तिथ्यादिसंकीर्त्यभर्त्रायुर्वृद्धिपुत्रपौत्रसौभाग्यादिप्राप्तिकामन
याचरितबृहद्गौरीव्रतोद्यापनंकरिष्ये॥ वृताचार्यःउक्तप्रकारेणालवालेसांगंबृहतीवृक्षंसंस्थाप्यसंपूज्य तत्पुरतः पीठेहैमींउमांगौ
रीर्मिमायेतिमंत्रेणसंपूज्य॥तत्पुरतः चतुःषष्टिबीजयुतं सौवर्णंबृहतीफलंसंपूज्यार्घ्यंदद्यात् मंत्रः क्षेमसंपत्करेदेविसर्वसौभाग्यदा
यिनि॥सर्वकामप्रदेदेविगृहाणार्घ्यंनमोस्तुते॥ चंद्रोदयोत्तरंअर्घ्यं गगनांगणसंदीपलक्ष्मीबंधोनिशाकर॥गृहाणार्घ्यंमया
दत्तंरोहिण्यासहितःशशिन् ॥ ततः अग्निंप्रतिष्ठाप्यान्वादध्यात् ॥ गौरींअष्टोत्तरशतसंख्याकघृताक्ततिलाहुतिभिः॥ब्रह्मादिदे
वताश्च एकैकयाऽज्याहुत्यायक्ष्ये॥ ततः पंचविप्रान्सुवासिनीः संपूज्य कंचुकीताटंकंकंठसूत्रंसौभाग्यद्रव्यसिंदूरजीरकगोधूमपिष्ट

जातबृहतीफलपंचकयुक्तानिसूत्रवेष्टितवंशपात्रयुग्मयुतानिसवस्त्रदक्षिणानिपंचवायनानिदत्वागांचदत्वासदन्नेनब्राह्मणान्संतर्प्य
ततःस्वर्णनिर्मितंबृहतीफलंकंठेधृत्वा ॥ इष्टजनैःसहभुंजीत ॥ ॥अथमार्गशीर्षेमाघेवाकृष्णतृतीयायांसौभाग्यसुंदरीव्रतम्
तच्चतुर्थीयुतायांकार्यम् ॥ ॥तिथ्यादिसंकीर्त्यआत्मनःसर्वदुःखव्याधिदारिद्र्यादिनाशनपूर्वकसुखसौभाग्यपुत्रपौत्रसुरूपतादि
प्राप्तिद्वारागौरीप्रीत्यर्थंसौभाग्यसुंदरीव्रतंकरिष्येइतिसंकल्प्य ॥ ततःउमामहेश्वरंसौवर्णंराजतंवाकृत्वाएकलिंगोद्भवेमंडलेवक्ष्यमा
णद्रव्यैर्द्वादशमासेषुप्रतितृतीयायांसंपूजयेत् ॥ ॥मार्गशीर्षेकृष्णातृतीयायांप्रातःअपामार्गदंतकाष्ठंसौभाग्यसुंदरीदेवतानाम ॥
द्रोणपुष्पंदाडिमीफलेनार्घ्यं ॥ मोदकनैवेद्यंयक्षकर्दमलेपः ॥अगरुधूपः घृतदीपः सर्वासुतृतीयासु एवंपूजांकृत्वास्वयंकर्पूरंप्राशयेत्
एवंसर्वत्र ॥ पौषेबेलिकादंतकाष्ठं ॥राज्यसौभाग्यदादेवता मरुबकपुष्पं ॥ धात्रीफलेनार्घ्यं ॥ घृतशर्करान्वितवटकानैवेद्यं ॥ स्वयंकं-
कोलकंप्राशयेत् ॥ माघेबदरीदंतकाष्ठं ॥ रूपसौभाग्यसुंदरीनाम ॥ चूतपुष्पं ॥ नारीकेरेणार्घ्यं ॥ शष्कुलीनैवेद्यं ॥ कस्तूरीभक्षणं ॥ फा-
ल्गुने ॥ बिल्वदंतकाष्ठं ॥ सौभाग्यसुंदरीनाम ॥ कांचनारपुष्पं ॥ घृतशर्करान्वितसक्तुनैवेद्यं ॥ बीजपूरेणार्घ्यं ॥ चंदनोदकप्राशनं ॥

चैत्रे ॥ जंबूदंतकाष्ठं ॥ सुखसौभाग्यसुंदरीनाम ॥ दमनकपुष्पम् ॥ शर्कराघृतयुतमंडकनैवेद्यं ॥ बिल्वफलेनार्घ्यं ॥ अर्जुनपत्रभक्षणं ॥
वैशाखे ॥ मालतीदंतकाष्ठं ॥ पतिसौभाग्यदानाम ॥ सितारक्तपद्ममल्लिकापुष्पं ॥ शर्कराघृतकर्पूरयुतदधिभक्तनैवेद्यं ॥ कदलीफलेना-
र्घ्यं ॥ सुवर्णोदकप्राशनं ॥ ज्येष्ठे ॥ यूथिकादंतकाष्ठं ॥ लावण्यसुभगानाम ॥ कदलीफलेनार्घ्यं ॥ घृतपूरिकानैवेद्यं ॥ मौक्तिकांबुप्राशनम् ॥
आषाढे ॥ अशोककाष्ठं ॥ पतिसौभाग्यसुंदरीनाम ॥ बिल्वपत्रम् ॥ जंबूफलार्घ्यं ॥ पायसनैवेद्यं ॥ विद्रुमांबुप्राशनं ॥ श्रावणे ॥ बिल्वका-
ष्ठं ॥ सर्वेश्वरीनाम जातिपुष्पम् ॥ शुभ्रकसारनैवेद्यं ॥ कदलीफलार्घ्यं ॥ रजतांबुप्राशनं ॥ भाद्रे ॥ मातुलिंगकाष्ठं ॥ सौभाग्यसुंदरी
नाम ॥ उत्पलपुष्पं ॥ कर्कोटकीफलेनार्घ्यं ॥ शाकवर्त्तिन्यं नैवेद्यं ॥ माणिक्यांबुप्राशनम् ॥ आश्विने ॥ प्लक्षकाष्ठं ॥ पुत्रसौभाग्यसुंदरी
नाम ॥ शतपत्रपुष्पं ॥ नारिंगकूष्मांडार्घ्यं ॥ घृतशर्करान्वितंगणकनैवेद्यं ॥ औदुंबरांबुप्राशनं ॥ कार्तिके ॥ औदुंबरकाष्ठं ॥ संयोगसुंदरी
नाम ॥ केतकीपुष्पं ॥ सुगंधिशालिनैवेद्यं ॥ अक्षोडेनार्घ्यं ॥ लवंगप्राशनं ॥ एवंचीर्णेव्रते मार्गकृष्णातृतीयायामुद्यापनं ॥ ॥
पूर्वोक्तसंकल्पंकृत्वा आचार्यंवृत्वा मंडले उमामहेश्वरमूर्तिं पूर्वपूजितां रक्तवस्त्राद्युपचारैः संपूज्य ॥ प्रागुक्तपुष्पादिकं समर्प्य ॥ जाग्र

णादिनारात्रिंनिनयेत् ॥ प्रातःअग्निंप्रतिष्ठाप्यअन्वादध्यात् ॥ अथप्रधानम् ॥उमामहेश्वरौमधुत्रययुक्तैःकुसुंभकुसुमैः किंशुकैर्वाशतपत्रैर्वाअष्टोत्तरशतसंख्याकाहुतिभिःप्रतिदैवतंतत्तन्मंत्राभ्यांब्रह्मादिदेवताश्चएकैकयाआज्याहुत्यायक्ष्ये ॥ ततःअष्टौचत्वारिवामिथुनानिवस्त्रादिभिःसंपूज्य ॥ तेभ्यःकुंकुमलवणगुडनारिकेरनागवल्लीदूर्वाकज्जलसिंदुराष्टकंशूर्पस्थंदत्वाऽऽचार्यायमंडलंगांचदत्वाप्रार्थयेत् ॥ पूजितासिमयादेविसर्वसौभाग्यसुंदरि ॥ दत्वामत्प्रार्थितान्कामान्गच्छदेवियथासुखम् ॥ ततःसदन्नेनब्राह्मणानूसंतर्प्यआशिषोगृहीत्वास्वयंभुंजीत ॥ ॥ अथपरशुरामजयंतीव्रतम् ॥ ॥वैशाखशुक्लतृतीयायांनिशाद्ययामव्यापिन्यांभविष्ये ॥ तिथ्यादिसंकीर्त्यअखिलपापक्षयपूर्वकंचतुर्विधपुरुषार्थसिद्धिद्वाराश्रीपरमेश्वरप्रीत्यर्थंआचरितपरशुरामजयंतीव्रतोद्यापनंकरिष्ये इतिसंकल्प्य वृतनाचार्यःसर्वतोभद्रस्थकलशेहैमंपरशुरामंविष्णोर्नुकमितिमंत्रेणसंपूज्यरात्रौजागरणंकृत्वा ॥ प्रातरग्निंप्रतिष्ठाप्यपरशुरामंघृताक्तपायसद्रव्येणअष्टोत्तरशतसंख्याकाहुतिभिः ब्रह्मादिदेवताश्चएकैकयाआज्याहुत्यायक्ष्ये ॥ ततःपीठंगांचदत्वाब्राह्मणान्भोजयेत् ॥ ॥इतिपरशुरामजयंती ॥ इतितृतीयाव्रतानि ॥ ॥अथचतु

र्थीव्रतानि ॥ ॥ संकष्टचतुर्थीव्रतंचंद्रोदयव्यापिन्यांकार्यं ॥ दिनद्वयेनद्याप्तावव्याप्तौवापूर्वा ॥ मासपक्षाद्युल्लिख्य विद्याधनपुत्रा
रोग्यमुक्ति संकष्टनाशकामेन स्त्रीतुभर्त्रादिकामनयाचरितंसंकष्टीव्रतोद्यापनंकरिष्ये ॥ कृताचार्यः उक्तप्रकारेणसर्वतोभद्रस्थकलशे
हैमंगणेशंप्रतिष्ठाप्यपूजयेत् ॥ अथध्यानं लंबोदरंचतुर्बाहुंत्रिनेत्रंरक्तवर्णकं ॥ नानारत्नैःसुवेषाढ्यंप्रसन्नास्यंविचिंतये ॥ ध्यानं
श्रीगणेशाय० आवाहयामि० गणेशाय० आसनं० विघ्ननाशिने० पाद्यं० लंबोदरायेति० अर्घ्यं० चंद्रार्धधारिणे० विश्वप्रियाय० आच
मं० ब्रह्मचारिणे० स्नानं० शूर्पकर्णाय० वस्त्रं उपवीतंकुब्जायच ॥ चंदनंरुद्रपुत्राय पुष्पंचगुणशालिने ॥ विकटायेतिधूपंच दीपंरुद्रप्रिया
यच ॥ नैवेद्यंविघ्ननाशायतांबूलंसिद्धिदायच ॥ फलंसंकष्टनाशायएकदंतायदक्षिणां ॥ नीराजनंवामनाय प्रदक्षिणाहरसूनवे ॥ पुष्पां
जलिंकुमारायनमोविद्याधरायच ॥ ततः शूर्पपायसंसंपूर्णंरक्तवस्त्रेणवेष्टितं ॥ गणेशायनिवेदयेत् ॥ ततश्चंद्रायार्घ्यं ॥ तदानींपंच
म्यांवाहोमंकुर्यात् ॥ प्रधानंगणपतिंगणानांत्वेतिमंत्रेणतद्गायत्र्यावादूर्वारक्ताक्षता आज्यमोदकपायसद्रव्यैःप्रतिद्रव्यं अष्टोत्तरसह
स्रमष्टोत्तरशतमष्टाविंशतिर्वातत्संख्याकाहुतिभिर्यक्ष्ये ॥ ब्रह्मादिदेवताश्चकेवलमोदकैर्वा एवंहोमंसमाप्य एकविंशतिब्राह्मणा

नेकविंशतिनामभिः वस्त्रादिना पूज्य एकविंशतिपक्वान्नैः संतर्पयेत् ॥ गणंजयः गणपतिः हेरंबः धरणीधरः महागणपतिः यक्षेश्वरः
क्षिप्रप्रसादनः ॥ अमोघसिद्धिः अमृतः मंत्रः चिंतामणिः निधिः सुमंगलः बीजं आशापूरकः वरदः शिवः काश्यपः नंदनः वाचासि
द्धिः ढौंढिनायकः ततः आचार्याय शूर्पस्थैकविंशतिमोदकवायनं रक्तवस्त्रवेष्टितं दद्यात् मंत्रः विप्रवर्य नमस्तुभ्यं मोदकान्वै ददाम्य
हं ॥ आपदुद्धरणार्थाय गृहाण द्विजसत्तम ॥ गणेशं प्रार्थयेत् ॥ अबुद्धमतिरिक्तं वा द्रव्यहीनं मया कृतं ॥ तत्सर्वं पूर्णतां यातु वि
घ्नराज नमोस्तुते ॥ ततो गां सोपस्करं पीठं च आचार्याय दत्वा आशिषो गृहीत्वा इष्टैः सह भुंजीत ॥ ॥ इति संकष्टचतुर्थीव्रतम् ॥ ॥
श्रावणे कार्तिके वा शुक्लचतुर्थ्यां दूर्वागणपतिव्रतं भविष्ये ॥ ॥ तिथ्याद्युल्लिख्य अतुलसौभाग्यपुत्रपौत्रधनैश्वर्याद्यभिवृद्धिद्वारा श्री
गणपतिप्रीत्यर्थं दूर्वागणपतिव्रतं सुद्यापनं करिष्ये ॥ तच्च वर्षपंचकं वर्षत्रयं वा कार्यं ॥ तत्र विधिः सर्वतोभद्रस्थरक्तवस्त्रवेष्टितता
म्रकलशे हेमपीठे हैमीं दूर्वां निधाय तत्र हैमं गणेशं पूजयेत् ॥ विशेषः पूजायां बिल्वापामार्गशमीदूर्वातुलसीपत्रैः मोदकनैवेद्यं ॥ प्रार्थ
नामंत्रः ॥ गणेश्वर गणाध्यक्ष गौरीपुत्र गजानन ॥ व्रतं संपूर्णतां यातु त्वत्प्रसादादिभानन ॥ प्रतिमादानमंत्रः ॥ गृहाण भगवन्ब्रह्म

न्गणराजंसदक्षिणं॥व्रतंत्वद्वचनादद्यसंपूर्णंयातुसुव्रत॥ एवंपंचवर्षाणिकृत्वाउद्यापनमारभेत्॥ पूर्ववत्पूजयित्वा॥ दूर्वायुक्तैर्दश
भिर्मंत्रैर्गणेशंपूजयेत्॥ पंचगव्यस्नपनं॥ दशमंत्राः॥ गणाधिपाय॰ उमापुत्राय॰ अघनाशिने॰ विनायकाय॰ ईशपुत्राय॰ सर्वसिद्धि
प्रदायकाय॰ एकदंताय॰ इभवक्त्राय॰ मूषकवाहनाय॰ कुमारगुरवे॰ ततः व्रतपूर्तयेआचार्यायगांदत्वाभुंजीत॥ ॥भाद्रपदशुक्ल
चतुर्थ्यांमध्यान्हव्यापिन्यांसिद्धिविनायकव्रतम्॥ माघेमार्गशीर्षेश्रावणेवाप्रतिमासंशुक्लचतुर्थ्यांप्रातःशुक्लतिलैःस्नात्वामध्यान्हे-
संकल्पंकृत्वापूजयेत्॥ देशकालौसंकीर्त्यममविजयपुत्रादिकामसिद्धिद्वाराश्रीसिद्धिविनायकप्रीत्यर्थंसिद्धिविनायकव्रतंकरिष्ये॥
धान्यराशिस्थरक्तवस्त्रवेष्टितारक्तकलशेहैमंगणेशंपूजयेत्॥ मूलमंत्रेण॥ एकदंतंशूर्पकर्णंगजवक्त्रंचतुर्भुजंपाशांकुशधरंदेवंध्या-
येत्सिद्धिविनायकं॥ ध्यानं॰ ॥पुष्पोत्तरमंगपूजा॥ गणेशायनमः पादौपूजयामि॥ विघ्नराजाय॰ जानुनीपू॰ आखुवाहनाय॰ ऊरू॰
हेरंबाय॰ कटिं॰ कामारिसूनवे॰ नाभिंपू॰ लंबोदराय॰ उदरं॰ गौरीसुताय॰ स्तनौपू॰ गणनाथाय॰ हृदयं॰ स्थूलकंठाय॰ कंठं॰ स्कंदप्रि
याय॰ स्कंधौ॰ पाशहस्ताय॰ हस्तौपू॰ गजवक्त्राय॰ मुखंपू॰ विघ्नहर्त्रेनमः नेत्रे॰ सर्वेश्वराय॰ शिरःपू॰ गणाधिपाय॰ सर्वांगंपू॰

अथपत्रपूजा ॥ सुमुखायनमः पाचीपत्रंसमर्पयामि ॥ गणाधिपाय॰ भृंगराजप॰ उमापुत्राय॰ बिल्वप॰ गजाननाय॰ दूर्वापत्रं॰
लंबोदराय॰ बदरीप॰ हरसूनवे॰ धत्तूरप॰ वक्रतुंडाय॰ शमीप॰ गुहाग्रजाय॰ अपामार्ग॰ एकदंताय॰ बृहती॰ विकटाय॰ करवीरप॰
विनायकायनमः अश्मांतकप॰ कपिलाय॰ अर्कपत्रं॰ गजदंताय॰ अर्जुन॰ विघ्नराजाय॰ विष्णुक्रांत पत्रं॰ बटवेन॰ दाडिमीप॰ सु
राग्रण्ये॰ देवदारु॰ भालचंद्राय॰ मरुबकप॰ हेरंबाय॰ सिंदूरप॰ चतुर्भुजाय॰ जातीप॰ सर्वेश्वरा॰ अगस्तिपत्रं॥ ततः दूर्वायुग्मंगंधपु-
ष्पाक्षतयुतंगृहीत्वापूजयेत् ॥ गणाधिपाय॰ उमापुत्राय॰ अघनाशिने॰ विनायकाय॰ ईशपुत्राय॰ सर्वसिद्धिप्रदा॰ एकदंता॰ इभवक्त्रा
यन॰ मूषकवाह॰ कुमारगुरवे॰ सर्वविघ्नहर्त्रे॰ ॥ ततोदेवंप्रार्थयेत् ॥ यन्मयाचरितंदेवव्रतमेतत्सुदुर्लभं ॥ त्वत्प्रसादाद्गणेशत्वंसफलं
कुरुसर्वदा ॥ घृतपाचितैकविंशतिमोदकान्गृहीत्वा दशवि प्रायदश आत्मनेएकंदेवाय ॥ वायनमंत्रः वाणकंफलसंयुक्तंमोदकैर्द-
शभिर्युतं ॥ गणेशप्रीणनार्थायतुभ्यंविप्रददाम्यहं ॥ ततः ब्राह्मणायदक्षिणांविनायकप्रतिमांदद्यात् ॥ मंत्रः विनायकगणेशानसर्वदेव
नमस्कृत ॥ पार्वतीप्रियविघ्नेशममविघ्नंविनाशय ॥ एवंएकविंशतिवर्षंकृत्वांतेपूर्ववद्देवंसंपूज्य ॥ ततआचार्यः अग्निंप्रतिष्ठाप्य अन्वा

दद्यात् ॥ गणेशंदूर्वापायसलड्डुकैः प्रतिद्रव्यमष्टोत्तरशतसंख्याकाहुतिभिर्यक्ष्ये ॥ ततः अधिकफलप्राप्तये एकविंशतिनामभिः एक-
विंशतिब्राह्मणान् दक्षिणापुरः सरंसंपूज्य एकविंशतिपक्वान्नैः प्रत्येकंसंपूज्य अन्यानपियथाविभवंसंपूज्य भूयसींदत्वाव्रतपूर्त्तयेगां
दद्यात् इतिभविष्ये ॥ कार्तिककृष्णाचतुर्थ्यांकरकचतुर्थीव्रतं ॥ भविष्येस्त्रीणामेव ॥ तिथ्याद्युल्लिख्य ममः सौभाग्यपुत्रपौ
त्रादिसुस्थिरश्रीप्राप्तयेकरकचतुर्थीव्रतंकरिष्ये ॥ पटादौवटंविलिख्यतदधस्ताच्छिवंस्कंदयुतांगौरींचंदनादिनालिखित्वापूजयेत्
मंत्रः ॥ नमःशिवायैसर्वायैसौभाग्यंसंततिंशुभाम् ॥ प्रयच्छभक्तियुक्तानांनारीणांहरवल्लभेइति ॥ नमोंतनाममंत्रेणशिवस्कंदगौरी
णांपूजाकार्या ॥ पिष्टकनैवेद्यं ॥ पक्वान्नपूरितदशकरकान्ब्राह्मणेभ्योदद्यात् ॥ चंद्रोदयोत्तरंचंद्रायार्घ्यंदद्यात्व्रतपूर्त्तयेगांदत्वास्वयंभुं
जीत ॥ ॥ अथदशरथललिताव्रतोद्यापनं स्कांदे ॥ आश्विनकृष्णाचतुर्थ्यां ॥ तिथ्यादिसंकीर्त्यममपुत्रादिप्राप्तिपूर्वकसौभाग्या
द्यभिवृद्धिद्वाराश्रीरोहिणीसहितचंद्ररूपीपरमेश्वरप्रीत्यर्थंदशवर्षावधिआचरितस्यदशरथललिताव्रतस्योद्यापनंकरिष्येइतिसंक-
ल्प्य ॥ वृताचार्यःरात्रौपुष्पमंडपिकामध्येसर्वतोभद्रेपूर्ववत्कलशंसंस्थाप्यतदुपरिवंशपात्रेचतुरंगुलांसौवर्णींरोहिणीप्रतिमां अष्टां

गुलराजनचंद्रप्रतिमांचपूर्ववत्पूजयेत् ॥ प्रार्थयेच्च ॥ दशरथायत्वयादत्तारामाद्याश्वस्कृताश्वते ॥ सौभाग्यंललितेदेविदेहितहृन्म-
मापिहि ॥ पुष्पांते ऽगपूजा ॥ उपांगललितायै० पादौपू० उमायै० जानुनीपू० सत्येन० नाभिं० कुमारिकायै० स्तनौ० लक्ष्म्यै० भुजौ०
स्कभगप्रियायै० सुखं० दशरथललितायै० मूर्धानं० ततः प्रातः पुनः संपूज्य अग्निंप्रतिष्ठाप्यअन्वादध्यात् ॥ प्रधानंचंद्रसहितरोहि
णींगौरीर्मिमायेतिमंत्रेणअष्टोत्तरशतदूर्वाहुतिभिः ॥ नमोदेव्येतिमंत्रेणअष्टोत्तरशतघृताक्तपंचखाद्याहुतिभिश्चयक्ष्ये ॥ ब्रह्मादि
मंडलदेवताश्चैकैकयाहुत्यायक्ष्ये ॥ ततःसपत्नीकान्दशब्राह्मणान् वस्त्रालंकारादिभिःसंपूज्य ॥ स्कगंधोदकपूरितदशकरकान्दद्या
त् ॥ ततःआचार्यंवस्त्रादिभिः संपूज्य ॥ सदक्षिणंवायनंदद्यात् ॥ ॥ तत्रमंत्रः ॥ इदंतुदशलड्डुकंदक्षिणाफलसंयुतं ॥ ललिताप्री
णनार्थायब्राह्मणायददाम्यहं ॥ विसर्जनमंत्रः ॥ सवाहनाशक्तियुतावरदापूजितामया ॥ मातर्मामनुगृह्याद्यगम्यतांनिजमंदिरम्
इतिविसृज्यसदक्षिणंसोपस्करंपीठंगांचदत्वाब्राह्मणान्मोदकपायसादिभिःसंतर्प्यआशिषोगृहीत्वास्वयंभुंजीत ॥ एवंयःकुरुते
भक्त्याधनपुत्रानवाप्नुयात् ॥ ॥ ॥ इतिदशरथललिताव्रतोद्यापनंसमाप्तम् ॥ ॥ अथपंचमीव्रतानि ॥ भाद्रपद

शुक्लपंचम्यांऋषिपंचमीव्रतं॥ मध्यान्हव्यापिन्यांदिनद्वयेतद्व्याप्तावव्याप्तौवापूर्वविद्धायांकार्यं॥ नद्यादौप्रातःदंतधावनपूर्वकंस्ना
त्वाममज्ञानतोज्ञानतोवारजस्वलावस्थायांकृतसंपर्कजनितदुर्योनिलदोषपरिहारद्वाराशुभफलप्राप्त्यर्थंआचरितऋषिपंचमीव्रतोद्या
पनंकरिष्ये॥ वृताचार्यःसर्वतोभद्रेसप्तकलशेषुएकस्मिन्वाहैमीःअरुंधतीसहिताःसप्तर्षिप्रतिमाःपूजयेत्॥ प्रत्येकंसप्तर्षीणांवेदो
क्तमंत्राः॥ ऋषेमंत्रकृतांस्तोमैरितिकश्यपं॥ अत्रियद्वामवेतिअत्रिं॥ एवानस्पृधइतिभरद्वाजं॥ प्रसूतोभक्षमकरंचरेतिविश्वामित्रं॥अ
भित्वागोतमागिरेतिगौतमं॥ गृणानाजमदग्निनेतिजमदग्निं॥उतासिमैत्रावरुणोवसिष्ठेतिवसिष्ठं॥कश्यपोत्रिर्भरद्वाजोविश्वामित्रो
थगौतमः॥ जमदग्निर्वसिष्ठश्वसाध्वीचैवाप्यरुंधतीति॥ देवाएतस्येति॥ सहस्तोमाःसहछंदसइतिनाममंत्रैर्वापूजयेत्॥ ततःवाय
नंदत्वाक्षमापयेत्॥ न्यूनातिरिक्तकर्माणिमयायानिकृतानिच॥क्षमध्वंतानिसर्वाणियूयंसर्वेतपोधनाः॥ततःकथाश्रवणादिनारात्रिं
निनयेत्॥प्रातःअग्निंप्रतिष्ठाप्यअन्वादध्यात्॥ प्रधानंअरुंधतीसहितकश्यपादिसप्तर्षीन्पूजामंत्रेणतिलव्रीहियवसर्पिर्द्रव्यैःप्रति
द्रव्यमष्टोत्तरसहस्रमष्टोत्तरशतमष्टाविंशतिर्वाततत्संख्याकाहुतिभिः ब्रह्मादिदेवताश्चएकैकयाऽज्याहुत्यायक्ष्ये॥शेषेणस्विष्टकृ

तं ॥ ततः पुनः प्रतिमापूजां कृत्वा सपत्नीकान् सप्तब्राह्मणान्वस्त्रादिना संपूज्य ॥ तेभ्यः क्रमेण दक्षिणा प्रतिमायुतकलशान् दद्यात्
मंत्रः ॥ प्रतिगृण्ह द्विजः श्रेष्ठ प्रतिमादिसमन्वितं ॥ कलशं ऋषिसंप्रीत्यै व्रतसंपूर्तिहेतवे ॥ यदेककुंभे सर्वप्रतिमापूजनं तदा सर्व
प्रतिमायुतं कलशमाचार्याय दद्यात् ॥ अन्येभ्यः दक्षिणावस्त्रयुतान् पक्वान्नपूरितान् कलशान् दद्यात् ॥ ततः सप्तभ्यः सप्त गा आचा
र्याय एकां गां दत्वा प्रार्थयेत् ॥ सप्तर्षयः शुभाः श्रेष्ठाः सर्वेषां च शुभप्रदाः ॥ सर्वपापं च मे घ्नंतु ज्ञानतोऽज्ञानतः कृतं ॥ एते सप्तर्षयः सर्वभ
क्त्या संपूजिता मया ॥ यथोक्तफलदाः संतु व्रतस्य फलदायकाः इति ॥ ततः आशिषो गृहीत्वा ब्राह्मणान् संतर्प्य स्वयं भुंजीत ॥ ॥
अथ भविष्ये नागपंचमीव्रतं ॥ ॥ श्रावणशुक्लपंचम्यां मध्याह्नव्यापिन्यां कार्यं ॥ नद्यादौ स्नात्वा तिथ्याद्युल्लिख्य मम संतानवृद्धिपू
र्वक स्वर्वाद्यभिवृद्धि द्वारा श्रीनागरूपी परमेश्वर प्रीत्यर्थं नागपंचमीव्रतं करिष्ये ॥ पटे चंदनादिना नागान्विलिख्य मृन्मयान्वा कृत्वा
दधिदूर्वाक्षतकुशादिभिः संपूजयेत् ॥ अनेन मंत्रेण ॥ अनंतं वासुकिं शेषं पद्मनाभं महाबलं ॥ कालियं तक्षकं चैव कर्कोटकधनंजयौ ॥
एवं संपूज्य विप्रेभ्यो भोजनं दत्वा स्वयं तैलपक्वविवर्जितं भोजनं कृत्वा रात्रौ नत्वा नरः स्वपेत् ॥ ॥ ॥ भाद्रशुक्लपंचम्यां नागपं

चमीव्रतम्॥ ॥प्रभासखंडे॥ चतुर्थ्यामेकभक्तं कृत्वापंचम्यांप्रातःस्नातः देशकालौसंकीर्त्यममसंतत्यभिवृद्धिपूर्वकसौभाग्यवृ
द्धिद्वाराश्रीनागरूपीपरमेश्वरप्रीत्यर्थं द्वादशवर्षात्मकं नागपंचमीव्रतंकरिष्ये॥ततःसौवर्णराजतंदारुमयंमृन्मयंवापंचफणंनागंकृ
त्वाकरवीरशतपत्रजातीपुष्पपद्मगंधादिभिःसंपूज्य॥ब्राह्मणान्घृतपायसैःसंतर्प्यस्वयंनक्तंकुर्यात्॥ एवंप्रतिमासं॥ मासना
मानि॥ अनंतंवासुकिंशेषंपद्मंकंबलमेवच॥तथाकर्कोटकंनागंनागमश्वतरंतथा॥धृतराष्ट्रंशंखपालंकालियंतक्षकंतथा॥पिंगलंच
महानागंमासिमासिप्रकीर्तिताः॥एवंद्वादशवर्षसंपाद्यंतेभारपरिमितस्वर्णनागंसंपूज्य॥व्यासरूपिणेब्राह्मणायपूजापूर्वकंदद्या
त्॥अंतेपायसादिनाब्राह्मणान्संतर्प्यस्वयंभुंजीत॥अत्रैवनागदष्टव्रतंहेमाद्रौभविष्ये॥ चतुर्थ्यामेकभक्तंकृत्वा॥ प्रातःपंच
म्यांस्नात्वातिथ्याद्युल्लिख्यअस्मत्संबंधिनागदष्टमृतप्राप्तसर्पयोनिमुक्तिपूर्वकतत्स्वर्गतिकामनया एकवर्षात्मकंनागदष्टपंचमीव्र
तंकरिष्ये॥ ततःसौवर्णराजतंमृन्मयंवापंचफणंनागंनिर्माययक्षीरादिस्नपनपूर्वकंषोडशोपचारैःसंपूज्यघृतपायसमोदकैःब्राह्म-
णान्संतर्प्यस्वयंनक्तंकुर्यात्॥पंचम्यांनक्तंएवंप्रतिमासंपंचम्यांकार्यं॥मासनामानिपूर्वोक्तानिअनंतादीनिग्राह्याणि॥ संवत्सरां

नैरलंचित्रितंकांचनंनागंसर्वतोभद्रस्थकलशेसंस्थाप्य पूर्ववत्पूजयित्वारात्रौजागरणंकृत्वाषष्ठ्यांप्रातः संपूज्य कथावाचकाय सोप
स्करंपीठंगांचदद्यात्॥ तत्रमंत्रः दानकालेपठेदेतत्स्मरंनारायणंप्रभुं॥ सर्वगंसर्वधातारं अनंतमपराजितं॥ येकेचिन्मेकुलेसर्पैर्दष्टाः
प्राप्तास्त्वधोगतिम्॥ व्रतदानेनगोविंदक्षक्तिभाजोभवंतुते॥ इत्युक्त्वासितचंदनाक्षतयुतसुदकंउदकेनिक्षिपेत्॥ ततःब्राह्मणानांचयती
नांचनागानुद्दिश्यमहाभोज्यंदत्वाआशिषोगृहीत्वास्वयंभुंजीत सर्पयोनेर्मुक्तोभवति॥ ॥ आश्विनशुक्लपंचम्यांमध्यान्हव्या-
पिन्यांउपांगललिताव्रतम्॥ प्रातःदंतधावनपूर्वकंनद्यादौस्नात्वाशुक्लंवासः परिधायमंडपिकादिकंकृत्वा॥ तिथ्यादिसंकीर्त्य
मयापुत्रपौत्रविद्यारोग्यसुखविजयपुष्ट्यादिकामेनस्त्रीत्ववैधव्यकामनयाउपांगललिताप्रीत्यर्थंअष्टवर्षात्मकाचरितउपांगलल‍ि
ताव्रतोद्यापनंकरिष्यइतिसंकल्प्य॥ वृताचार्यःएकलिंगोद्भवेकलशोपरिसौवर्णींललिताप्रतिमांपूजयेत्॥ पौराणमंत्रैःश्रीसूक्ते
नचध्यानं॥ नीलकौशेयवसनांहेमाभांकमलासनां॥ भक्तानांवरदांनित्यंललितांचिंतयाम्यहं॥ पुष्पपूजांते॥ उपांगललितायैन
मः॥ पादौपूजयामि॥ भवान्यै॰ गुल्फौपू॰ सिद्धेश्वर्यै॰ जंघे॰ श्रियै॰ ऊरू॰ विश्वरूपिण्यै॰ कटिं॰ देव्यै॰ नाभिं॰ वरदायै॰ कुक्षिं॰ शिवायै॰

हृदयं॰ वागीश्वर्यै॰ स्कंधौ॰ महादेव्यै॰ बाहू॰ प्रकृतिभद्रायै॰ करौ॰ पद्मिन्यै॰ कंठं॰ सरस्वत्यै॰ मुखं॰ पद्मकेसरवासिन्यै॰ नासिकां॰ महि
षमर्दिन्यै॰ नेत्रे॰ लक्ष्म्यै॰ कर्णौ॰ भवान्यै॰ ललाटं॰ विंध्यवासिन्यै॰ शिरः पू॰ सिंहवाहिन्यै॰ सर्वांगंपूज॰ ततोधूपादिकं॰ पुष्पांजल्यंतेसा
ग्रानष्टचत्वारिंशत्परिमितान् दूर्वान्हस्तेनादाय ॥ बहुप्ररोहासततमसृताहरितालता ॥ यथेयंललितेमातस्तथामेस्युर्मनोरथाः ॥ इ
तिमंत्रेणार्पयेत् ॥ पुनः एवमेवाष्टचत्वारिंशद्धारंसमर्पयेत् ॥ ततः प्रदक्षिणानमस्कारः ॥ कथाश्रवणादिनारात्रौजागरणंकृत्वाप्रातः
नित्यंकर्मनिर्वर्त्यपुनःसंपूज्यदेव्यैअष्टौवटकान्समर्प्य ॥ अग्निंप्रतिष्ठाप्यअन्वादध्यात् ॥ प्रधानंउपांगललितांगौरींमिमायेतिमंत्रे-
णअष्टोत्तरशतदूर्वाहुतिभिः ॥ नमोदेव्याइतिमंत्रेणअष्टोत्तरशततिलसर्पिःपंचखाद्ययुतपायसाहुतिभिर्यक्ष्ये ॥ ब्रह्मादिदेवताश्चैकै
कयाहुत्या ॥ एवंहोमंसंपाद्यअष्टौब्राह्मणान्वस्त्रादिभिःसंपूज्य तेभ्यः पक्वान्नपूरितान् दक्षिणासहितान् अष्टौकलशान् दद्यात् ॥ ततः आ
चार्यंवस्त्रालंकारादिभिःसंपूज्यसदक्षिणंविंशतिवटकसहितंवायनंदद्यात् ॥ मंत्रः ॥ पक्वान्नफलसंयुक्तंसघृतंदक्षिणान्वितं ॥ उपांग
ललिताप्रीत्यैब्राह्मणायददाम्यहं ॥ ततः देवींविसर्जयेत् मंत्रः ॥ सवाहनाशक्तियुतावरदापूजितामया ॥ मातर्मामनुगृह्याथ गम्य-

तांनिजमंदिरं॥ एवंविसृज्यसोपस्करंपीठंगांचआचार्यायदत्वा ब्राह्मणान्सदन्नेनभोजयित्वा आशिषोगृहीत्वास्वयंविंशतिवट
कान्भुंजीत॥ ॥इतिस्कांदेललिताव्रतोद्यापनम्॥ ॥इतिश्रीमच्छांकर्यांपंचमीव्रतानि॥ अथषष्ठीव्रतानि॥ ॥
भाद्रशुक्लषष्ठ्यांललिताषष्ठीव्रतं॥ ॥प्रातःनारीनद्यांस्नात्वाशुक्लांबरास्रवेषाभरणोपेतावंशपात्रेनद्याःपंचपिंडाकृतिंवालुकांसंगृ
ह्यगृहमागत्यपीठादौसंस्थाप्यतिथ्यादिसंकीर्त्यममअखंडितसौभाग्यप्राप्तिपूर्वकसौख्याभिवृद्धिद्वाराश्रीललिताषष्ठीप्रीत्यर्थंल
लिताषष्ठीव्रतंकरिष्ये॥ ध्यानादिभिःपूजयेत्॥ पंकजंकरवीरंनेपालींमालतींनीलोत्पलंकेतकींतगरंपुष्पसंख्याअष्टोत्तरशतं
अष्टाविंशतिवासंगृह्यसमर्प्यसोहालककरंजगुडवेष्टकर्णवेष्टमोदकादिभिःनैवेद्यंपुरतोन्यसेत्॥कूष्मांडनारीकेलत्रपुसदाडि
मबीजपूरतुंडीरकारवेंडादितत्कालसंभूतैःफलैःशोभांकृत्वा धान्यराशिस्थदीपावलीभिःसमंततःभूषयेत्॥ एवंपूजांसमापयेत्
प्रार्थयेच्च॥ललितेललितेदेविसौख्यसौभाग्यदायिनि॥अनंतंदेहिसौभाग्यंभगवत्यवरंपरं॥ततःरात्रौगीतवाद्यादिभिर्मेषोन्मेषर
हितंसखीभिःसहजागरणंकृत्वासप्तम्यांप्रातःतत्सर्वंनदींप्रतिनीत्वागंधपुष्पाक्षतादिभिरभ्यर्च्यतत्सर्वंनैवेद्यादिविप्रायदत्वागृह

मागत्यअग्निंप्रतिष्ठाप्यअष्टोत्तरशतदूर्वां तिलघृतपंचखाद्ययुतपायसंचहुत्वादेवपितृमनुष्यान्सुवासिनीःकन्यकाश्चालंकारादि-
भिःपंचदशब्राह्मणांश्चवस्त्रादिभिःसंपूज्यगांचदत्वाबहुविधैर्भक्ष्यभोज्यैःसंतर्प्य॥ ललितामेऽस्तुसंप्रीतेतिसंप्रार्थ्यस्वयंभुंजीतेति
॥ अथकपिलाषष्ठीव्रतं॥ हेमाद्रौभविष्ये॥ ॥भाद्रकृष्णाषष्ठ्यांकपिलाषष्ठीव्रतं॥ तच्चपूर्वापरयुतायांकार्यं॥ योग
विशेषेण॥योगलक्षणपुराणसमुच्चये॥ भाद्रेमास्यसितेपक्षेभानौचैवकरेस्थिते॥पातेकुजेचरोहिण्यांसाषष्ठीकपिलास्मृता॥सं
योगेतुचतुर्णांचनिर्दिष्टापरमेष्ठिनेति॥ ॥वराहपुराणेऽपि॥ ॥नभस्येकृष्णपक्षेतुरोहिणीपातभूसुतैः युक्ताषष्ठीपुराणज्ञैः
कपिलापरिकीर्तिता॥व्रतोपवासनियमैर्भास्करंतत्रपूजयेत्॥कपिलांतुद्विजाग्र्यायदत्वाक्रतुफलंलभेत्॥एवंषष्ठीयदातदापंचम्यां
एकभक्तंकृत्वाषष्ठ्यांप्रातःदंतधावनंकृत्वाजलपूर्णांजलिंकृत्वा॥निराहारोघदेवेशत्वद्भक्तःस्त्वत्परायणः॥पूजयिष्याम्यहंभ त्याश
रणंभवभास्करेत्यर्घ्यंदत्वानद्यादौगत्वातत्रदेवदारूशीरकुंकुममेलामनःशिलापद्मकपत्रकयष्टिमधुगव्यानांपेषणंकृत्वाक्षीरेणा-
लोड्यकल्केनस्नानंकार्यमनेनमंत्रेण॥आपस्त्वमसिदेवेशज्योतिषांपतिरेवच॥पापंनाशयमेदेवमनोवाक्कायकर्मजं॥ ततः

पंचगव्यस्नानं॥ ततः पंचपल्लवैर्मार्जनं ॥ ततः शुद्धमृत्तिकांगृहीत्वास्नायादनेनमंत्रेण ॥ मृत्तिकेब्रह्मपूतासिकाश्यपेनाभिमंत्रि-
ता॥ पवित्रंकुरुमांनित्यंसर्वपापात्समुद्धरेति ॥ ततः वरुणंपूजयेत् ॥ पूजामंत्रः ॥ पाशाग्रहस्तवरुणसर्ववारीश्वरप्रभो॥ अद्याहं
प्रार्थयामित्वांव्रतंकुरुसुरेश्वर॥ ततः स्नात्वातिलकंधृत्वाभास्करंप्रणमेत् ॥आदित्योभास्करोभानुरविः सूर्योदिवाकरः॥ प्रभाक-
रोमित्तोवीरोदेवः सर्वेश्वरोहरिः ॥ ततोगृहमागत्यतिथ्यादिसंकीर्त्यममअशेषपापक्षयपूर्वकरूपसंपदारोग्यविपुलसंततिस्वर्ग
लोकप्राप्तिद्वारासर्वावभासकसर्वतेजोमयश्रीसूर्यनारायणप्रीत्यर्थंकपिलाषष्ठीव्रतंकरिष्ये ॥ तदंगपुण्याहवाचनादिकृत्वाततो
वृताचार्यः॥ स्वयंवागोमयेनोपलिप्तायांभूमौकुंकुमेनाष्टदलपद्मंविधाय तदुपरिसर्वतोभद्रेकलशोपरिरक्तवस्त्रेष्टपत्रंसकर्णिकं
पद्मंकृत्वातत्रपूर्वादिक्रमेणदेवताआवाहयेत् ॥ सूर्यं॰ भास्करं॰ सुवर्णरेतसं॰ रविं॰ आदित्यं॰ दिवाकरं॰ प्रभाकरं॰ सूर्यंती
व्ररश्मिधरं॰ मध्ये आधाररूपिणंवरुणंन्यसेत्॥ तदुपरिसप्ताश्वभूषितंसौवर्णरथंतत्राग्रतः सौवर्णमरुणंसारथिंकृत्वारक्तपुष्पैः
सुगंधैः श्चपूजयेत् ॥ मंत्रः॥ विननातनयोदेवः कर्मसाक्षीसुरेश्वर ॥ सप्ताश्वः सप्तरज्जुश्चअरुणोमेप्रसीदतु॥ एवंअरुणंसंपू-

ज्य ॥ रथोपरिसौवर्णीं सूर्यप्रतिमां आकृष्णेति मंत्रेणावाहयेत् ॥ परितः दीप्तादिशक्तीर्न्यसेत् ॥ ताश्च ॥ दीप्तासूक्ष्माभद्राविनीविमला
अनघाप्रमोघावैद्युतासर्वतोमुखी ॥ ततोध्यात्वासनंपाद्यं ॥ ततः करवीरार्कपुष्परक्तचंदनचंपकपुष्पस्रक्गंधकुंकुमयुतंपात्रंहस्तेना
दायजानुभ्यामवनींगत्वार्घ्यंनिवेदयेत् अनेन ॥ वेदगर्भनमस्तुभ्यंवेदगर्भनमोस्तुते ॥ अव्यक्तमूर्त्तयेतुभ्यंअर्घ्यंगृण्हनमोस्तुते ॥
ब्रह्ममूर्तिधरायैवचतुर्वक्त्रसनातन ॥ सृष्टिस्थितौसंस्थितायगृहाणार्घ्यंनमोऽस्तुते ॥ विष्णुरूपधरोदेवः पीतवस्त्रश्चतुर्भुजः ॥ प्र
भवः सर्वलोकानांअर्घ्यंगृण्हनमोस्तुते ॥ कालात्मासर्वभूतात्मावेदात्मासर्वतोमुखः ॥ जन्ममृत्युजराशोकसंसारभयनाशन ॥ दा
रिद्र्यव्यसनध्वंसीश्रीमान्देवोदिवाकरः ॥ हरिदश्वोंशुमालीचअर्घ्यंगृण्हनमो॰ चतुर्भिर्मूर्तिभिः संस्थामष्टाभिः परिगीयते ॥ साम
ध्वनिस्तुयोज्ञेयोयज्ञेअर्घ्यंनमोस्तुते ॥ ततः पुष्पपूजांते अंगपूजा ॥ भास्करायनमः ॥ शिखांपूजयामि ॥ सूर्याय॰ ललाटं॰ भानवे॰ च
क्षुषी॰ रवयेन॰ मुखं॰ भानुमते॰ कंठंपू॰ पद्मगर्भा॰ द्वोहस्तौ॰ तिमिरक्षयकृते॰ स्तनौ॰ जातवेदसे॰ नाभिं॰ भानवे॰ कठिं॰ उग्र-
रूपाय॰ गुह्यं॰ तेजोरूपा॰ जंघे॰ स्थूलसूक्ष्मगुणरूपा॰ पादौ॰ ततोपूजांसमर्प्यप्रार्थयेत् ॥ अग्निमीळेनमस्तुभ्यंनमस्तेजातवेदसे

इषेचैवनमस्तुभ्यंअग्नयेचनमोनमः॥आत्मरूपिन्नमस्तुभ्यंविश्वमूर्तेनमोनमः॥त्वंब्रह्मात्वंचविष्णुश्चत्वंधातात्वंहुताशनः॥सु-
क्तिकाममभीप्सामिप्रार्थयामिसुरेश्वरेतिनमस्कारंकुर्यात्॥ततःसेवर्चसेतिमंत्रेणपाणिभ्यांतोयेनमुखंसंमृज्य॥हंसःशुचिषदि
त्यृचासूर्यमालोक्य॥उदुत्यंचित्रंदेवानामितिसूक्तेदेवाग्रतोजपेत्॥ततःपूर्वफलपुष्पाक्षतानानाविधभक्ष्यैःफलकंकृत्वातत्रशुभ
देशेशय्यांप्रकल्पयेत्॥ततःलवणाचलोपरिरौप्यमयंखड्गहस्तंवस्त्रयुगच्छन्नंसंस्थाप्यपूजयेत्॥मंत्रः॥नमस्तेक्रोधरूपायखड्ग
हस्तजिघांसते॥जिघांसकामंत्वांदृष्ट्वादुद्रुवुःसर्वदेवताः॥तयाव्याप्तंसमेरुपृष्ठंचंडभास्करसप्रभं॥अतस्त्वांपूजयिष्यामिअर्घ्यंगृ
ह्णनमोस्तुते॥ततस्तांरात्रिमतिवाह्याभ्युदितेसूर्येपुनःस्नात्वादेवंसंपूज्यअग्निंप्रतिष्ठाप्यअन्वादध्यात्॥ प्रधानंश्रीसूर्यंअर्कसमि
द्भिःघृताक्ततिलैःसिद्धचरुणाघृतेनचप्रतिद्रव्यंअष्टोत्तरशतसंख्याकाहुतिभिः॥आकृष्णेनेतिमंत्रेणव्याहृतिभिर्वायक्ष्ये॥पीठाव
रणदेवताःब्रह्मादिदेवताश्चआज्याहुत्या॥ततःस्विष्टकृतं॥ एवंहोमंसंपाद्य॥ततःपूर्वोपस्करसहितांकपिलांगांउक्तप्रकारेण
संपूज्यप्रार्थयेत्॥कपिलेसर्वदेवानांपूजनीयासिरोहिणि॥सर्वतीर्थमयीयस्मादतःशांतिंप्रयच्छमे॥ततःआचार्यपूजनंकृत्वा

ततःतद्धस्तेगोभूहिरण्यवासःव्रीहिलवणतिलान् दत्वाकपिलांप्रार्थयेत्॥ कपिलेपुण्यकर्मासिनिष्पाद्येपुण्यकर्मणि ॥मांससमुद्
रदीनंच ददताह्यक्षयंकुरु ॥ ब्रह्मणोत्पादितादेवि अग्निकुंडात्स्फस्फप्रभा॥ नमस्तेकपिलेपुण्येसर्वदेवनमस्कृते ॥जयनित्यंमहास
त्वेसर्वतीर्थादिमंगले॥ दातारंस्वजनोपेतंब्रह्मलोकंनयाशुवै ॥ततःप्रदक्षिणांकृत्वाआचार्यहस्तेसोपस्करंसदक्षिणांपीठंगांचदद्यादने
नमंत्रेण ॥ दिव्यमूर्तिर्जगच्चक्षुर्द्वादशात्मादिवाकरः॥ कपिलासहितोदेवोममसुक्तिंप्रयच्छतु ॥ तस्मात्वंकपिलेपुण्यासर्वलोकस्यपा
वनी॥ प्रदत्तासहसूर्येणममसुक्तिप्रदाभव ॥ ततःअन्यब्राह्मणान्संपूज्यअन्नादिनासंतर्प्य आशिषोगृहीत्वास्फहृद्युतोभुंजीत॥
आरोग्यरूपसौभाग्यसर्वदुःखविवर्जितः॥अंतेगोलोकंगच्छतीतिहेमाद्रौस्कांदेकपिलाषष्ठीव्रतम् ॥ ॥ अथसर्वास्फषष्ठीषु
स्कंदषष्ठीव्रतं॥ हेमाद्रौभविष्ये॥ ॥ यस्यांकस्यांचित् षष्ठ्यांप्रातःस्नात्वादेशकालौसंकीर्त्यममसत्कुलादिजन्मप्राप्तिपूर्वकऐ-
हिकविद्यालक्ष्मीस्फरवाद्यभिवृद्धिद्वाराश्रीस्कंदप्रीत्यर्थंस्कंदषष्ठीव्रतंकरिष्ये ॥ ततःस्फवर्णादिनामूर्तिंकृत्वापीठेसंस्थाप्यपूजयि
त्वा ॥ दधिघृतपुष्पाक्षतायुतमर्घ्यंदद्यादनेनमंत्रेण ॥ सप्तर्षिदारजस्कंदसेनाधिपमहाबल ॥रुद्रोमाग्निजषड्वर्गमातृगर्भनमोस्तु

ते॥ प्रीयतांदेवसेनानीःसंपादयतुहृद्गमं॥ एवंपूजांकृत्वारात्रौभूमिंभाजनंकृत्वातैलपक्वविवर्जितंभोजनंकुर्यात्॥शक्तोसप्ताहमु
पोषणंवा॥ एवंशुक्लायांकृष्णायांचषष्ठ्यांकार्यं॥ सर्वाभीष्टसिद्धिः॥ ॥इतिश्रीमच्छंकर्यांव्रतोद्यापनकौमुद्यांषष्ठीव्रतानि॥
॥ अथसप्तमीव्रतानि॥ ॥श्रावणशुक्लसप्तम्यांमध्यान्हव्यापिन्यांशीतलाव्रतं॥ ॥हेमाद्रौभविष्ये॥ ॥ तद्विधिः॥
मासपक्षाद्युल्लिख्य॥ ममवैधव्यदारिद्र्यभर्तृवियोगनाशनपूर्वकपुत्रसौख्यधनधान्यप्राप्तयेशीतलाव्रतमहंकरिष्ये॥ तदंगपूज
नंकरिष्ये॥ ततःधान्यराश्युपरिकलशेस्वर्णादिनिर्मितांशीतलाप्रतिमांनाममंत्रैःपूजयेत्॥ध्यानं॥ स्कांदे॥वंदेहंशीतलांदेवींरा
सभस्थांदिगंबरां॥ मार्जनीकलशोपेतांशूर्पालंकृतमस्तकामिति॥ ततोऽर्घ्यंदद्यात्॥ मंत्रः॥शीतलेदहमेपापंपुत्रसौख्यप्रदेन-
मः॥ श्रावणस्यसितेपक्षेअर्घ्यंगृण्हनमोस्तुते॥ इत्यर्घ्यं॥ दधिघृतमिश्रपक्वान्ननैवेद्यं॥ ततःसप्तसुवासिनीःपूजयित्वाकथां
श्रुत्वाताभिःसहभुंजीत॥ ॥अथभाद्रशुक्लसप्तम्यांमुक्ताभरणव्रतं॥ हेमाद्रौ॥ ॥सलिलाशयेस्नात्वागृहमागत्यगोमया
दिलिप्तेशुद्धदेशेचमंडलंविधायतदुपरिचंदनादिनाउमासहितंशिवंलिखित्वोक्तप्रकारेणपूजयेत्॥ ॥ देशकालौसंकीर्त्य

मम सकलपापक्षयपूर्वकपुत्रपौत्रधनधान्यसौख्यातिशयप्राप्तिद्वाराश्रीसदाशिवप्रीत्यर्थंमुक्ताभरणसप्तमीव्रतंकरिष्ये॥ इति
संकल्प्य॥ पूर्वोक्तप्रकारेणपूजांसमाप्यप्रार्थयेत्॥ महादेवमहाराजप्रीत्यापापप्रणाशन॥ अस्माकंकुर्वतांपूजांसाधुवासाधुयोजितां
ज्ञानतोज्ञानतोवापिभवतीविहिनाचया॥ संपूर्णयतुविश्वेशोविमलाकोमलस्कतां॥ ततःदेवस्यपुरतः यावज्जीवंमयात्मातुशिव
स्यचनिवेदितः॥ इत्येवंसमयंकृत्वासौवर्णराजतंसौत्रंवादोरकंदेवाग्रतः संपूज्यअनेनदोरकंगृण्हीयात्॥ देवदेवजगन्नाथसर्वसौभा
ग्यदायक॥ गृण्हीयांदोररूपंत्वांसुत्रपौत्रप्रवर्धनं॥ ततःहस्तेबंधनमंत्रः॥ सप्तसामोपगीतंत्वांधारयामिजगद्गुरो॥ सूत्रग्रंथि-
स्थितंनित्यंधारयामिस्थिरोभवेत्सनेनमंत्रेणहस्तेबध्वा॥ ततःदहसर्वाणिपापानितुष्टिंकुरुदयानिधे॥ प्रसन्नःसन्नुमाकांतदीर्घायुः
पुत्रदोभव॥ इतिजीर्णदोरकोत्तारणंकृत्वाब्राह्मणायएकादशशतसंख्याकान्मंडुकान्वटकान्घृतदक्षिणायुतान्वायनंदत्वातद्दे
वद्द्रव्यंस्वयंभुंजीतएवंप्रतिमासंशुक्लसप्तम्यांकार्यं॥ वर्षांतेहैमींराजतींवामुद्रिकांताम्रपात्रोपरिस्थाप्यब्राह्मणेभ्योदद्यात्॥ आचा
र्यायविशेषेणसौवर्णमंगुलीयकंपुष्पकुंकमतांबूलांजनसूत्रयुतंसदक्षिणंगांचदद्यात्ब्राह्मणान्भोजयित्वास्वयंभुंजीत॥ संतान

वृद्धिंलब्ध्वातुशिवलोकेमहीयते॥ ॥अथमाघशुक्लसप्तम्यांरथसप्तमीव्रतंहेमाद्रौभविष्ये॥ ॥ षष्ठ्यांप्रातःशुक्लतिलैःनद्या
दौस्नात्वादेवादीन्पूजयित्वासूर्यालयंगत्वासूर्यंनमस्कृत्यगंधपुष्पाक्षतैःसंपूज्यस्वगृहमागत्यअतिथींश्चसंभोज्यविधिमा
नेदिनेतैलवर्जितंस्वयमश्नीयात्॥ रात्रौविप्रंसमाहूयसंपूज्यनियमंकुर्यात्॥सप्तम्यांतुनिराहारोभूत्वाभोगविवर्जितः॥
भोक्ष्येऽष्टम्यांजगन्नाथनिर्विघ्नंतन्त्रमेकुरु॥ इत्युच्चार्यतोयंतोयेषुनिक्षिपेत्॥ततःविप्रंविसृज्यभूमौस्वपेत्॥ततःसप्तम्यांप्रातः
अरुणोदयवेलायांहरिद्रामलकचूर्णमृत्तिलैश्चसहस्नात्वाकृतावश्यकःसौरसूक्तंजप्त्वागोमयेनोपलिप्तायांभूमौनदीतीरेगृहां
गणेश्वत्थमूलेतुलसीमूलेवावस्त्रादिनामंडपंकृत्वातन्मध्येवेदिकातदुपरिधातुनाकुंकुमेनवाष्टदलंविधायतदुपरिआरक्तवस्त्रंप्र-
सार्यउपरिएकचक्रंहयान्वितंसोपस्करंसौवर्णंराजतंवारथंसंस्थाप्यतत्रसौवर्णींसूर्यप्रतिमामावाह्य॥ ध्यानं॥ द्विभुजंशंखच
क्राढ्यंपद्मासनसमन्वितं॥ मुहूर्त्तसमयेसम्यक्ध्येयंनारायणंशुभं॥रक्तगंधारक्तपुष्पगुग्गुलागरुधूपकाः॥परमान्नंनैवेद्यं॥
एवंषोडशोपचारैःसंपूज्य॥तदग्रेधातुनारजनीचूर्णेनवाष्टदलपद्मंविरिच्य पूर्वादिक्रमेण॥ रविं॥आदित्यं सवितारंमित्रं रव

गपतिं सूर्यं भास्करं दिवाकरं मित्रंसंपूज्य मध्येनारायणंपूजयित्वा ॥ भक्तिहीनंक्रियाहीनं मंत्रहीनंजगत्पते ॥ प्रसादात्तवसंपू
र्णमर्चनंयदिहाकृतमे ॥ इतिसंप्रार्थ्य ॥ षण्मुहूर्त्तैरवैप्रासेसतितलदायदिच्छयारविंसंप्रार्थ्यदक्षिणशिरस्कंधौतवस्त्रेणाच्छाद्यस्व
स्वपेत् ॥ यावदुल्लंघ्यभास्करोगच्छेत्तावत् ॥ स्वप्नेसूर्यः ॥ मनोभिलषितंकथयेत् ॥ ततःउत्थायप्रवालमुक्तासहितं घृतेनलेपितं
गर्भेहाटकपूर्णंदुकूलवेष्टितंसदक्षिणंतांबूलंकूष्मांडंदद्यात् ॥ तदभावेमातुलिंगंदेयं ॥ अकिंचनेनससारथिंरथंपंचवर्णकैर्निर्मा
यसौवर्णींप्रतिमांपूर्ववदर्चयेत् ततोरात्रौजागरणंकृत्वाप्रातस्तत्सर्वंगुरवेदत्वागांचदद्यात् ततः इष्टजनैःसहभुंजीत ॥ एवंइ
हपुत्रपौत्रानुत्पाद्यसूर्यलोकंयास्यति ॥ अत्रैवस्नानं ॥ अरुणोदयेसप्तार्कपर्णानिबदरीपत्राणिचशिरसिनिधायस्नात्वाप्रार्थ
येत् ॥ यद्यज्जन्मकृतंपापंमयासप्तसुजन्मसु ॥ तन्मेरोगंचशोकंचमाकरीहंतुसप्तमी ॥ स्नानानंतरमर्घ्यं ॥ सप्तसप्तिवहप्रीत
सप्तलोकस्यदीपन ॥ सप्तम्यासहितोदेवगृहाणार्घ्यंदिवाकरेति ॥ प्रार्थना ॥ जननीसर्वभूतानांसप्तमीसप्तकेतिथिः ॥ सप्तव्याहृ
तिकेदेविनमस्तेसूर्यमंडले ॥ ॥ इतिभविष्योक्तस्नानादिविधिः ॥ माघशुक्लसप्तम्यामचलासप्तमीव्रतं ॥ ॥ तत्र माघशु

वू॰ षष्ठ्यांप्रातःस्नात्वादेशकालौसंकीर्त्यममअखिलपापक्षयपूर्वकरूपसौभाग्यसर्वकामफलप्राप्तिद्वाराश्रीसूर्यनारायणप्रीत्यर्थं
अचलासप्तमीव्रतंकरिष्येइतिसंकल्प्य भास्करंसंपूज्यस्वयंएकभक्तंकुर्यात् ॥ ततःसप्तम्यांअरुणोदयेस्वगंभीरंजलाशयंतडागंदे
वखातंसरितंवाकेनचिन्नचालितंयावत्तावद्गत्वाप्रथमंसौवर्णेराजतेअलाबुमयेवापात्रेतैलवर्त्तियुतंकुंकुमभूषितंदीपंसंस्थाप्य
तत्पात्रंशिरसिधृत्वाहृदयेभास्करंध्यात्वाइमंमंत्रमुदीरयेत् ॥ नमस्तेरुद्ररूपायरसानांपतयेनमः ॥ वरुणायनमस्तेस्तुहरिवासन
मोस्तुते ॥ इत्युक्त्वाजलेदीपंपरिहरेत् ॥ ततःस्नात्वादेवताःसंतर्प्यतत्तीरेचंदनेनाष्टदलंपद्मंविरच्य ॥ तत्रपूर्वादिक्रमेण ॥ रविं ॥
भानुं ॥ विवस्वंतं ॥ सवितारं ॥ अर्कं ॥ सहस्रकिरणं ॥ सर्वात्मानं ॥ मध्येउमायुतंशिवंप्रणवयुतंचसंस्थाप्यसंपूज्यविसृज्यचस्वगृ
हमागत्यताम्रपात्रेऽथवामृन्मयेघृतगुडयुतंतिलपिष्टंसौवर्णअशक्तौतिलपिष्टजंवातालपत्रंरक्तवस्त्रेणाच्छाद्यसंपूज्यब्राह्मणद्वारा
चालयेत् ॥ ततःब्राह्मणंसंपूज्यतत्सर्वंनिवेदयेत् ॥ समग्रंदिनंहृदिभास्करंध्यायन्भुंजीत ॥ रूपसौभाग्यवतीस्यात् ॥ ॥ अस्या
मेवपुत्रसप्तमीव्रतम् ॥ आदित्यपुराणे ॥ ॥ षष्ठ्यांप्रातःस्नात्वातिथ्यादिसंकीर्त्यममसद्गुणयुतपुत्रप्राप्तिपूर्वकपौत्राद्यभिवृ

ष्टि द्वाराश्रीसूर्यनारायणप्रीत्यर्थंपुत्रसप्तमीव्रतंकरिष्येइतिसंकल्प्य ॥ ततः सूर्यंश्वेतमाल्यांबरलेपनैः संपूज्यउपोषणंकृत्वाभूमौ स्वपेत् ॥ ततः पुनरुत्थायस्नात्वापुनः सूर्यंपूजयित्वाग्निहोत्रहोमंकुर्यात् ॥ दध्योदनेनपयसापायसेनद्विजान्संतर्प्यभुंजीत ॥ एवंपक्षद्वयेपि ॥ कृष्णेविशेषः ॥ रक्तोत्पलरक्तपुष्पैः पूजनं ॥ एवंसंवत्सरपर्यंतंकृत्वापुत्रप्राप्तिर्भवेत् ॥ ॥ इतिश्रीमच्छंकरविरचितायांव्रतोद्यापनकौस्तुभेसप्तमीव्रतानि ॥ ॥ अथाष्टमीव्रतानि ॥ बुधयुक्तायांशुक्लाष्टम्यांबुधाष्टमीव्रतम् तत्रसप्तम्यांसंकल्पपूर्वकंदंतधावनादिकृत्वादशविप्रान्निमंत्र्यअष्टम्यांप्रातःगंगादितीर्थेस्नात्वादेशकालौसंकीर्त्यममइहजन्म-निजन्मांतरेचबाल्याद्यारभ्यकर्मणामनसाजानताजानतावास्वर्णाद्यपहृतदोषपरिहारपूर्वकपुत्रपौत्रादिसकलमनोरथप्राप्त्यर्थंश्रीपरमेश्वरप्रीत्यर्थंमयाआचरितबुधाष्टमीव्रतोद्यापनंकरिष्ये ॥ तदंगंपुण्याहवाचनादिकृत्वावृताचार्यःरंगवल्यादिविरा-जितदेशेसर्वतोभद्रमंडलोपरिपंचप्रस्थकलशेपूर्णपात्रोपरिपंचवर्णैरष्टदलंपद्मंकृत्वा ॥ तत्रउद्बुध्यध्वेतिमंत्रेणस्वर्णनिर्मितबु-धप्रतिमांमध्येसंस्थाप्य ॥ तद्दक्षिणेविष्णुंइदंविष्णुरितिमंत्रेणवामेसहस्रशीर्षेतिनारायणं॰ दलेषुपूर्वादिक्रमेण ॥ रविं ॥ सोमं

भौमंगुरुं ॥ शुक्रं ॥ शनिं ॥ राहुं ॥ केतुं ॥ दलाग्रेषुप्रागादिक्रमेण ॥ अनंतं ॥ वामनं ॥ विष्णुं ॥ सौरं ॥ सत्यं ॥ जनार्दनं ॥ हंसं ॥ नाराय-
णं ॥ बाह्येइंद्रादींश्चसंस्थाप्य ॥ दक्षिणे ॥ यमं ॥ चित्रगुप्तं ॥ श्यामलंचस्थापयेत् ॥ ततः मंडलात्सरितः ॥ अष्टाष्टलड्डुकयज्ञोपवीत
दक्षिणायुतानष्टकलशान्संस्थाप्यउक्तरीत्यापीतवस्त्रपुष्पादिभिः पूजयेत् ॥ पुष्पपूजांतेअंगपूजा ॥ बुधायनमः पादौपूजया
मि ॥ सोमपुत्राय॰ जानुनीपूजयामि ॥ तारकाय॰ कटिं॰ राजपुत्रा॰ उदरं॰ इलाप्रिया॰ हृदयं॰ कुमाराय॰ वक्षः॰ पुरूरवसःपित्रे॰
बाहू॰ सोमसुताय॰ अंसौ॰ पीतवर्णाय॰ मुखं॰ ज्ञानाय॰ नेत्रे॰ बुधाय॰ मूर्धानं॰ एवंसमाप्य ॥ तदुत्तरेउक्तरीत्याग्रहान्संस्था-
प्यपूजयेत् ॥ केचित्पृथक्ग्रहकरणंनेच्छंति ॥ तेषांमंडलांतःपातित्वात् ॥ ततः बुधायार्घ्यं ॥ सौवर्णादिपात्रेगंधपुष्पाक्षतयुतजल
मादायजानुभ्यांअवनींगत्वा ॥ उर्वश्याश्चगुरुर्यस्तु यःपुरूरवसःपिता ॥ योग्रहाणामधिपतिर्बुधोनः संप्रसीदतु ॥ रात्रौकथाश्र
वणादिनाजागरणंकृत्वा ॥ प्रातःपुनःसंपूज्याग्निंप्रतिष्ठाप्यअन्वादध्यात् ॥ प्रधानंबुधं अपामार्गसमिद्यववव्रीहितिलमिश्रगोधू
मद्रव्यैः पृथक्पृथक् अष्टोत्तरशतसंख्याकाहुतिभिः अधिप्रत्यधिदेवौचतैरेवद्रव्यैः पृथक् अष्टविंशतिसंख्याकाहुतिभिः ॥ आव

रणदेवताश्चैकैकयाज्याहुत्या आदित्यादिग्रहान्तत्तद्द्रव्यैः अष्टाष्टसंख्यया यक्ष्ये ॥ मंडलदेवताश्च एकैकयाज्याहुत्या ॥ एवं होमं संपा-
द्य स्विष्टकृदादि प्रायश्चित्तं हुत्वा बलिदानं पूर्णाहुतिं च संपाद्य आचार्यादीन् संपूज्य देवतोद्वासनांतं कृत्वा आचार्यादयः यजमानमभि
षिंच्य ततो यजमानः विभूतिधारणं कृत्वा आचार्याय अष्टलड्डुकवायनं ॥ संतुष्टो वायनादस्मादिलानाथो ग्रहेश्वरः ॥ वरांश्च विष्णु
नादत्तान्सकलान्नः प्रयच्छतु ॥ सोपस्करं पीठं गां च दत्वा अन्येभ्यः पूर्वस्थापितकलशान् दत्वा सदन्नेन संतर्प्य आशिषो गृहीत्वा स्व
यं भुंजीत ॥ ॥ अथ शुक्लादि श्रावणकृष्णाष्टम्यां दशाफलव्रतम् ॥ आदित्यपुराणे ॥ ॥ अष्टम्यां जन्मसमये स्नात्वा देशकाल
संकीर्तनांते मम दुःखशोकदारिद्र्यादिनाशपूर्वकसकलसुखसौभाग्यादिप्राप्तिद्वारा श्रीकृष्णप्रीत्यर्थं दशवर्षात्मकं दशाहं दशाफलव्र
तं करिष्य इति संकल्प्य पीठादौ श्रीकृष्णं संपूज्य दश तुलसीदलानि दशनामभिः ॥ कृष्ण विष्ण्वनंत गोविंद गरुडध्वज दामोदर हृषीके
श पद्मनाभ हरि प्रभुभ्यः समर्पयेत् ॥ पूजनमंत्रः ॥ नारायणाय देवाय गोकुलागारवासिने ॥ दिव्याय दिव्यरूपाय बालकृष्णाय ते न
मः ॥ तद्विष्णोरिति वा तदग्रे दशगुणं दशग्रंथियुतं सूत्रं न्यसेत् ॥ पुरतः दशपद्मानि पिष्टेन कृत्वा पूजयित्वा तत्सूत्रं कंठे हस्ते वा ॥ मंत्रः

संसारार्णवमग्नानांनराणांपापकर्मणां॥ इहामुत्रफलावाप्तिंकुरुष्वपुरुषोत्तम ॥ धृत्वादशाहंव्रतमाचरेत्॥ दशमेह्निपूजनंकृत्वा
प्रस्थगोधूमचूर्णेनत्रिंशन्मोदकान्कृत्वादशदेवायदशब्राह्मणायदशआत्मनेमोदकान्दशविधफलदक्षिणायुतदशमोदकवायनं
त्रिलोकीनाथदेवेशसर्वभूतदयानिधे॥ दानेनानेनदेवेशयथोक्तफलदोभवेति॥ दत्वाप्रार्थयेत्॥ वसुदेवजगन्नाथवांछितार्थफलप्रद॥ व्रते
नानेनसुप्रीतोरक्षत्वंभवसागरात्॥ ततःभोजनंकुर्यात्॥ एवंदशवर्षपर्यंतं॥ दशफलनामानि॥ नारिकेलंचदालिंबंनारिंगंबदलीफलं॥ पूगीफलं
मातुलिंगंजंबीरंखर्जुरीफलं॥ कर्कोटकीबदामादिदशाफलमितिस्मृतं ॥ उद्यापनं॥ पूर्वोक्तसंकल्पांतेवृवाचार्यः॥ सर्वतोभद्रस्यक
लशोपरिहैमींश्रीकृष्णप्रतिमांसंस्थाप्यपूर्वोक्तप्रकारेणसुवर्णतुलसीदलेनचसंपूज्यरात्रौजागरणंकुर्यात्॥ प्रातरग्निंप्रतिष्ठाप्यअ
न्वादध्यात्॥ प्रधानंश्रीकृष्णंअश्वत्थसमिच्चरुघृतद्रव्यैःप्रत्येकमष्टोत्तरशतसंख्ययामंडलदेवताश्चएकैकयाज्याहुत्यायक्ष्ये॥ एवं
होमंसंपाद्यपूर्वोक्तप्रकारेणवायनंदत्वासोपस्करंपीठंगांचदद्यात्॥ अन्यान्ब्राह्मणांश्चसंतर्प्यआशिषोगृहीत्वाभुंजीत॥ ॥
अथश्रावणकृष्णाअष्टम्यांनिशीथव्यापिन्यांजन्माष्टमीव्रतम्॥ ॥ प्रातःदंतधावनपूर्वकंस्नात्वादेशकालौसंकीर्त्यममअखि

लपापक्षयपूर्वकधर्मार्थकाममोक्षचतुर्विधपुरुषार्थसिद्धिद्वारा अमुककामनया वा आचरितजन्माष्टमीव्रतोद्यापनं करिष्ये ॥ तदंगपुण्या
हवाचनादि कृत्वा ॥ वृताचार्यः गोमयादिलिप्तशुद्धदेशे पंचवर्णवस्त्रपुष्पमालाफलादिशोभिते वेद्यां सर्वतोभद्रे प्रस्थतिलोपरिस्थकल
शोपरि पूर्णपात्रे रौप्यमये पर्यंके सौवर्णीं देवकीं तंदुलसंगे वामस्तनपायिनं सौवर्णं श्रीकृष्णं इदं विष्णुरिति विष्णोर्नुकमिति वा मंत्रेण प-
रितः ॥ वसुदेवं० बलदेवं० नंदं० यशोदां० सुभद्रां० रोहिणीं० विधुं० मत्स्यादिदशरूपाणि ॥ आदित्यादिग्रहान् ॥ अश्विन्यादिसप्तविं
शतिनक्षत्राणि ॥ देवान् ॥ नागान् ॥ यक्षान् ॥ विद्याधरान् उरगान् यमुनां कालियं कंसं गाः योगनिद्रां० सात्यकिं उद्धवं अक्रूरं
उग्रसेनादियादवान् शंखं चक्रं गदां पद्मं त्रुटिं कालात्मानं अहोरात्रं मासं संवत्सरं सर्वात्मानं द्वारपालान् पुण्यशीलं सुशी-
लं जयं विजयं पुरतः गरुडं एवं नाममंत्रैरावाह्य पुरुषसूक्तेन पूजयेत् ॥ ध्यानं ॥ कृष्णं चतुर्भुजं देवं शंखचक्रगदाधरं ॥ पीतांब
रयुगोपेतं लक्ष्मीयुक्तं विभूषितं ॥ लसत्कौस्तुभशोभाढ्यं मेघश्यामं सुलोचनं ॥ ध्यायामि पुंडरीकाक्षं जगदानंदकारकं ॥ ॥ अंगपू
जा ॥ कृष्णाय नमः पादौ पूजयामि संकर्षणाय० गुल्फौ पूज० कालात्मने० जानुनी पू० विश्वकर्मणे० जंघे पू० विश्वनेत्रा० कटिं पू० पद्म

नाभाय॰ नाभिं॰ परमात्मने॰ हृदयं॰ श्रीकंठाय॰ कंठं॰ सर्वास्त्रधारिणे॰ बाहू॰ वाचस्पतयेमुखं॰ केशवाय॰ ललाटं॰ सर्वात्मने॰ शि
रः॰ पूजांसमाप्यस्तोत्रंपठेत्॥ अनघंवामनंशौरिंवैकुंठंपुरुषोत्तमं॥ वासुदेवंहृषीकेशंमाधवंमधुसूदनं॥ वाराहंपुंडरीकाक्षंनृसिं
हंदैत्यसूदनं॥ दामोदरंपद्मनाभंकेशवंगरुडध्वजम्॥ गोविंदमच्युतंविष्णुमनंतमपराजितम्॥ अधोक्षजंजगद्बीजंसृष्टिस्थि
त्यंतकारकम्॥ अनादिनिधनंकृष्णंत्रैलोक्येशंजगद्गुरुं॥ नारायणंचतुर्बाहुंशंखचक्रगदाधरं॥ पीतांबरधरंनित्यंवनमालाविरा-
जितं॥ श्रीवत्सांकंजगद्धेतुंश्रीधरंश्रीपतिंहरिं॥ इतिस्तोत्रंपठेत्॥ देवस्यजातकर्मषष्ठीपूजादिकृत्वा॥ पुरतःअभयावचाशुंठीगुडू
चीपिप्पलीशस्त्राणिनिक्षिप्यार्घ्यंदद्यात्॥ चंद्रोदये॥ जातःकंसवधार्थायभूभारोत्तारणायच॥ कौरवाणांविनाशायदैत्यानांनि
धनायच॥ पांडवानांहितार्थायधर्मसंस्थापनायच॥ गृहाणार्घ्यंमयादत्तंदेवकीसहितोहरेइति॥ कृष्णायार्घ्यं॥ अंगणेभूमौराज
तंचंद्रबिंबंसंपूज्यतस्यार्घ्यंजानुभ्यामवनींकृत्वा॥ क्षीरोदार्णवसंभूतलक्ष्मीबंधोनिशाकर॥ गृहाणार्घ्यंमयादत्तंरोहिण्यासहितः
शशिन्॥ रोहिण्याअर्घ्यं॥ दक्षस्यदुहितासाध्वीरोहिणीनामनामतः॥ सोमेनसहितेदेविगृहाणार्घ्यंनमोस्तुते॥ ततःप्रार्थना॥ त्रा

हि मां सर्वगः श्रीशहरे संसारसागरात् ॥ त्राहि मां सर्वपापघ्न दुःखशोकार्णवात्प्रभो ॥ यद्बाल्ये यच्च कौमारे यौवने यच्च वार्धके ॥ तत्पुण्यं वृद्धिमाप्नोतु पापं हर हलायुधेति ॥ रात्रौ जागरणं कुर्यात् ॥ प्रातः स्नात्वा संपूज्य अग्निं प्रतिष्ठाप्य अन्वादध्यात् ॥ प्रधानं विष्णुं इदं विष्णुरिति मंत्रेण पायसतिलव्रीहियवद्रव्यैः प्रति द्रव्यं अष्टोत्तरशतसंख्याकाहुतिभिः पुनः पंचखाद्येन विष्णोर्नुकमिति मंत्रेण अष्टोत्तरशतसंख्यया ॥ पुनः पुरुषसूक्तेन प्रत्यृचं एकैकयाज्याहुत्या महाव्याहृतिभिश्च अष्टाविंशतिसंख्याज्याहुतिभिः ॥ परिवारदेवताः ब्रह्मादिदेवताश्च एकैकयाज्याहुत्या शेषेण स्विष्टकृतं ततआचार्यं संपूज्य विप्रवेसति भूशय्यारोप्य वस्त्रकांचनादिदत्वा पीठं च दद्यात् श्रीकृष्णः प्रतिगृण्हाति श्रीकृष्णो वै ददाति च ॥ श्रीकृष्णस्तारको भाभ्यां श्रीकृष्णाय नमो नमः ॥ कृष्णायानंतरूपाय दास्यामि प्रतिमा- मिमां ॥ द्रव्यं विष्णुसमुद्भूतमतः शांतिं प्रयच्छ मे ॥ व्रतपूर्तये गां च दद्यात् ॥ अभिषेकः ॥ शतमर्धं विंशतिं दश वा ब्राह्मणान्संतर्प्य स्वयं भुंजीतेति भविष्योत्तरे ॥ ॥ अथ ज्येष्ठाव्रतं भाद्रपदशुक्ल अष्टम्यां ज्येष्ठार्क्षे ॥ ॥ इदं च ज्येष्ठा योगवशेन पूर्वविद्धायां परविद्धायां वा कार्यं ॥ दिनद्वये तद्योगे परैव ॥ पूर्वेद्यू रात्रौ तद्योगे पूर्वैव ॥ अन्यत्र विशेषः ॥ अष्टमी रविवार ज्येष्ठर्क्षयोगे नीलज्येष्ठेत्यु-

च्यते ॥ देशकालसंकीर्तनांतेमम अलक्ष्मीपरिहारपूर्वकधनधान्यपुत्रपौत्रसौभाग्यादि वृद्धि द्वाराश्रीज्येष्ठादेवताप्रीत्यर्थं अमुक
कामनासिद्ध्यर्थं वाज्येष्ठाव्रतं तदुद्यापनंकरिष्ये ॥ पूर्वेद्युः नद्याः शुद्धदेशजाः सिकताः समानीयतत्रदेवीस्वरूपंकृत्वापूजयेत् ॥ उद्याप-
नेतुसौवर्णींज्येष्ठाप्रतिमांमंडलेकलशोपरिसंस्थाप्यपूजयेत् ॥ त्रिलोचनांशुक्लदंतींबिभ्रतींराजतींतनुं ॥ विरक्तांरक्तनयनांज्येष्ठामा
वाहयाम्यहं ॥ इति नाममंत्रेणपूजा ॥ ज्येष्ठेश्रेष्ठेतपोनिष्ठेब्रह्मिष्ठेसत्यवादिनि ॥ एह्येहित्वंमहामायेअर्घ्यंगृण्हनमोस्तुते ॥ इत्यर्घ्यं
तामग्निवर्णामापोहिष्ठेतितिसृभिः ॥ हिरण्यवर्णेतिन्चतसृभिरभिषेकः ॥ प्रार्थना ॥ यस्याः सिंहोरथेयुक्तो व्याघ्रश्चापिमहाबलः ॥
ज्येष्ठामहमिमांदेवींप्रपद्येशरणंशुभां ॥ ततः तर्पणं ॥ ज्येष्ठांतर्पयामि ॥ सत्यांत॰ कलिप्रियांत॰ विद्यांत॰ वैनायकीं॰ तापिनींत॰ श्री
कृष्णांत॰ अपूपवायनंदत्वारात्रौजागरणंकृत्वाप्रातः पुनः संपूज्यअग्निंप्रतिष्ठाप्यअत्रप्रधानंगौरींतामग्निवर्णामितिमंत्रेणदधिम
धुक्षीरघृतैः प्रत्येकमष्टोत्तरशतसंख्याकाहुतिभिः मंडलदेवताश्चएवंहोमंकृत्वाआचार्य पूजनं संपाद्यकृष्णावस्त्रयुतंपीठंव्रतपूर्त
येगांचदद्यात् ॥ सुवासिनीः वस्त्रालंकारादिभिः संपूज्यब्राह्मणांश्चसंतर्प्यआशिषोगृहीत्वाभुंजीत ॥ सिकतादिकंनद्यांत्यजेत् ॥

एवंद्वादशवर्षपर्यंतमाजन्मपर्यंतंवा॥ ॥भाद्रशुक्लअष्टम्यांदूर्वाष्टमीव्रतम् भविष्ये॥ ॥प्रातःशुक्लतिलैःस्नात्वादेश-
कालौसंकीर्त्यममइहजन्मनिजन्मांतरेचअखंडसौभाग्यपुत्रपौत्रादिलक्ष्मीप्राप्त्यर्थंदूर्वाष्टमीव्रतंकरिष्ये॥ उदीचींदिशंगत्वादूर्वामूलं
नमस्कृत्यप्रार्थयेत्॥ त्वंदूर्वेमृतजन्मासिवंदितासिसुरासुरैः॥सौभाग्यंसंततिंदेहिसर्वकार्यकरीभव॥ यथाशाखाप्रशाखाभिर्विस्तृ
तासिमहीतले॥ तथाविस्तृतसंतानंदेहित्वमजरामरेति॥ तत्रैवगृहेवावितस्तिमात्रंदूर्वांआनीयपीठेसंस्थाप्यतत्रतन्मूलेशिवंगणे
शंचसंस्थाप्यतत्तन्मंत्रेणपूजयेत्॥ आगच्छदेविदूर्वेत्वंसर्वसंपत्प्रदायिनि॥ यावद्व्रतंसमाप्येतत्तावत्त्वंसन्निधाभव॥ इत्यावाहनं॥
दध्यक्षतैः स्रजोभिश्चपूजनं॥ खर्जूरीनारिकेलमातुलिंगद्राक्षाबदरलिकुचजंबीरबीजपूरदाडिमीफलैर्नैवेद्यंतैरेववायनंविप्राय
दत्वा पूर्ववत्संप्रार्थ्यदेवींविसर्जयेत्॥ मंत्रः॥ विष्णुदेहसमुद्भूतेदूर्वेत्वंहिप्रसीदमे॥ वंदितासर्वदेवैस्त्वंगम्यतांनिजमंदिरं॥ ततःस
दन्नेनब्राह्मणान् संतर्प्य॥स्वयंअनग्निपक्वमन्नंदधिफलमक्षारलवणमश्नीयात्॥ एवंप्रतिमासमष्टम्यां॥ एवंसंवत्सरंकृत्वाअंतेउद्या
पनंकुर्यात्॥ व्रतान्तेआचार्येमंडलोपरिकलशस्थवैणवपात्रेसप्तधान्ययुक्तेहैमींरौप्यमूलयुतांदूर्वांसंस्थाप्यपूर्वोक्तप्रकारेणपूजयित्वा॥

८३

रात्रौजागरणंकुर्यात्॥ प्रातरग्निंप्रतिष्ठाप्यअन्वादध्यात्॥ प्रधानं गौरीं कांडात्कांडादितिमंत्रेणतिलैः आज्येनच अष्टाधिकशतसंख्य
यायक्ष्ये॥ मंडलदेवताश्चैवंहोमंसंपाद्यब्राह्मणेभ्यः तिलपिष्टगोधूमसप्तधान्यानि फलानिचवायनत्वेनदत्वाआचार्यायवस्त्रादिभिः
संपूज्यसोपस्करंपीठंव्रतपूर्त्तयेगांचदत्वाद्वादशब्राह्मणान्सदन्नेनसंतर्प्य आशिषोगृहीत्वा॥ संतानवृद्धिर्भवति॥ ॥अथभा
द्रपदशुक्लाष्टमीमारभ्यषोडशदिनपर्यंतंमहालक्ष्मीव्रतम्॥ ॥तच्चार्धरात्रातिक्रमवर्तिन्यामष्टम्यांकार्यं॥ अत्रज्येष्ठायुतायां
प्राशस्त्यं॥ अष्टम्यांप्रातःषोडशवारंअंघ्रीकरौमुखंच प्रक्षाल्यषोडशगंडूषांश्चकृत्वा मंत्रस्नानपुरःसरंस्नात्वातिथ्यादिसंकीर्त्यमम
सकलदौर्भाग्यदुःखनिबर्हणपूर्वकधनधान्यऐश्वर्यपुत्रपौत्राद्यभिवृद्धिद्वाराश्रीमहालक्ष्मीप्रीत्यर्थंमहालक्ष्मीव्रतंकरिष्ये॥ ततःषो
डशतंतुमयंषोडशग्रंथियुतंसूत्रंनिर्माययविमलासनेसंस्थाप्य तत्र महालक्ष्मीसमागच्छपद्मनाभपदादिह॥ पंचोपचारपूजेयं
त्वदर्थंपरिकल्पितेति लक्ष्मीमावाह्य॥ षोडशदूर्वांकुरैःमालतीपुष्पकर्पूरचंदनादिभिः श्रीसूक्तेनलक्ष्मीसूक्तेनवासंपूज्यप्रार्थयेत्॥
धनंधान्यंधरांधर्मंकीर्तिमायुर्यशःश्रियं॥ तुरगान्दंतिनःपुत्रान्महालक्ष्मीःप्रयच्छमे॥ विष्णोर्वक्षसिपद्मेचशंखेचक्रेतथांबरे॥

लक्ष्मीदेवियथासित्वंगृहेसूत्रेतथावसेति अनेनपुरुषेणादक्षिणकरेस्त्रियाकंठेबध्वाकथांश्रुत्वाभुंजीत एवंकृष्णाष्टमीपर्यंतंप्रत्य
हंतदेवसूत्रंसंपूज्यधारयेत्॥कृष्णाष्टम्यांप्रातःवस्त्रगृहंरंगवल्यादिभिर्युतंकृत्वातत्रअष्टदलंइंद्रादिशक्तियुक्तंनिर्मायतत्रकाष्ठमृ
च्चंदनादिभिश्चतुर्भुजांगजपृष्ठगतांमहालक्ष्मीमूर्तिंविरच्यतत्रपूर्ववन्नूतनंसूत्रंप्रतिष्ठाप्यपूजयेत्॥ अथांगपूजा॥ ॥चप
लायैनमः॥ पादौपूजयामि॥ चंचलायै॰ जानुनी॰ कमलवासिन्यै॰ कटिंपूज॰ शांत्यै॰ नाभिं॰ मन्मथवासिन्यै॰ स्तनौपू॰ ललितायै॰
भुजद्वयं॰ हृत्कंठिन्यै॰ कंठंपू॰ मायायै॰ मुखं॰ श्रियै॰ शिरःपू॰ समायै॰ सर्वांगं॰ पूर्ववत्पूज्यप्रार्थ्यतन्नूतनसूत्रंपूर्ववद्धृत्वाषोडशनम
स्कारान्कृत्वाजीर्णदोरकं॥ महालक्ष्मिगृहाणत्वंदोरकंयन्मयाधृतं॥उत्तीर्यदोरकंबाह्वोर्लक्ष्मीपार्श्वेनिवेदयेत्॥ततःब्राह्मणान्संपू
ज्यशूर्पेषोडशदीपान्षोडशगोधूमलड्डुकांश्चनिधायदद्यात्॥चतुर्द्वादशसंख्याकान्दीपान्पिंडान्घृतप्लुतान्॥गृहाणत्वंद्विजश्रेष्ठ
वायनंप्रीतयेश्रियः॥ततःचंद्रोदयेसं तिचंद्रंसंपूज्यअर्घ्यंदद्यात्॥नमस्तेस्तुनिशानाथलक्ष्मीभ्रातर्नमोस्तुते॥व्रतंसंपूर्णतांया
तुगृहाणार्घ्यंविधोमम॥ ततःभोजनंकृत्वारात्रौजागरणंकुर्यात्॥प्रातःविसर्जयेत्॥अनेनमंत्रेण॥ पंकजंदेविसंत्यज्यममवेश्म

निसंविश॥ यथासूपुत्रभृत्याहंस्फुरवीस्यांत्वत्प्रसादतः॥ नत्सूत्रंवर्षपर्यंतंधारयेत्॥ एवंषोडशवर्षपर्यंतंअशक्तौषोडशदिनंवाच
रित्वांतेउद्यापनंकुर्यात्॥ पूर्वोक्तसंकल्पांते वृताचार्यः॥सर्वतोभद्रस्थकलशेहैमींमहालक्ष्मीप्रतिमांस्फुरुकुमिवेतिमंत्रेणसंस्था-
प्यपूर्ववत्पूजयेत्॥ चंद्रायार्घ्यंदत्वादेवींप्रार्थयेत्॥ क्षीरोदार्णवसंभूतेकमलेकमलालये॥प्रयच्छसर्वकामान्मेविष्णुवक्षस्थला
लये॥ पुत्रान्देहिधनंदेहिसौख्यंसौभाग्यमेवच॥कुरुश्रियंमहालक्ष्मिअलक्ष्मींत्वाशुनाशय॥रात्रौजागरणंकुर्यात्॥ प्रातरग्निं
प्रतिष्ठाप्यअन्वादध्यात्॥प्रधानंमहालक्ष्मीश्रीसूक्तेनप्रत्यृचंकमलैःपुनःघृताक्तपायसबिल्वघृतद्रव्यैःप्रत्येकमष्टोत्तरशतसं
ख्याकाहुतिभिः लक्ष्मीमंत्रेणयक्ष्येमंडलदेवताश्चाज्येन एवंहोमंकृत्वाआचार्यंसंपूज्यपीठंगांचदत्वा॥ततःषोडशमिथुनानिव
स्त्रादिभिःपूजयित्वाशूर्पेषोडशनानाविधभक्ष्याणिचंदनताडपत्रपूगीफलानिपर्णानिचनिक्षिप्यान्यशूर्पेणाच्छाद्यदद्यात्
क्षीरोदार्णवसंभूतालक्ष्मीश्चंद्रसहोदरा॥ व्रतेनानेनसंतुष्टाप्रीयतांविष्णुवल्लभा॥ एवंषोडश॥ ततःब्राह्मणान्संतर्प्यआशि
षोगृहीत्वाभुंजीत॥ ॥इतिश्रीमच्छंकर विरचितायांव्रतोद्यापनकौमुद्यांअष्टमीव्रतानि॥ ॥अथनवमीव्र-

तानि॥ ॥तत्र चैत्रशुद्धनवम्यां रामनवमीव्रतं॥ स्कांदे॥ ॥ तच्च परविद्धायां मध्याह्नव्यापिन्यां कार्यं॥ तिथ्यादि संकीर्त्य॥
आत्मनः अखिलपापक्षयपूर्वकचतुर्विधपुरुषार्थसिद्धिद्वारा मम आचरितस्य रामनवमीव्रतस्य सांगतासिद्ध्यर्थे तदुद्यापनं करिष्ये॥
ततः पूर्ववत् वृताचार्यः॥ सर्वतोभद्रस्थकलशे साक्षतपूर्णपात्रे षट्कोणं पद्मं विलिख्य तत्र मध्ये हैमं रामं षडक्षरेण त्रयोदशाक्षरेण
वा मूलमंत्रेण मूलमंत्र उक्तः॥ श्रीराम राम रामेति षडक्षरमंत्रः॥ श्रीरामजयरामजयजयराम इति त्रयोदशाक्षरः॥ वैदिक उक्तः॥ भद्रो
भद्रया सचमान आगादिति॥ तद्वामतः हैमीं सीतां जनकात्मजायै नम इति नाममंत्रेण च प्रतिष्ठाप्य परितः षट्कोणेषु क्रमेण दशरथं कौस
ल्यां लक्ष्मणं भरतं शत्रुघ्नं मारुतिं च नाममंत्रैः प्रतिष्ठाप्य पुरुषसूक्तेन पूजयेत्॥ पुष्पोत्तरं अंगपूजा॥ श्रीरामचंद्राय नमः पादौ पूजया
मि॥ एवं सर्वत्र॥ राजीवलोचनाय॰ गुल्फौ॰ रावणांतकाय॰ जानुनी पूजयामि॥ विश्वामित्रप्रिया॰ नाभिं॰ परमात्मने॰ हृदयं॰ श्रीकं
ठाय॰ कंठं॰ सर्वास्त्रधारिणे॰ बाहू॰ विश्वमूर्त्तये॰ मुखं॰ पद्मनाभाय॰ जिव्हां॰ दामोदराय॰ दंतान्॰ सीतापतये॰ ललाटं॰ ज्ञानगम्या
य॰ शिरः॰ सर्वात्मने नमः सर्वांगं॰ नमस्कारमंत्रः॥ नमो देवाधिदेवाय रघुनाथाय शार्ङ्गिणे॥ चिन्मयानंदरूपाय सीतायाः पतये न

मइति ॥ अर्घ्यमंत्रः ॥ दशाननवधार्थायधर्मसंस्थापनायच ॥ राक्षसानांविनाशायदैत्यानांनिधनायच ॥ परित्राणायसाधूनांजातोरा
मःस्वयंहरिः ॥ गृहाणार्घ्यंमयादत्तंभ्रात्रादिसहितोनघइति ॥ ततःपुराणपठणादिनारात्रिंनिनयेत् ॥ प्रातः अग्निंप्रतिष्ठाप्यअन्वाद
ध्यात् ॥ अत्रप्रधानं रामं आज्यपायसद्रव्येण प्रत्येकंअष्टोत्तरशतसंख्याकाहुतिभिः मूलमंत्रेणजानक्यादिसप्तदेवताः उक्तद्रव्येण
अष्टाविंशतिसंख्याकाहुतिभिः ॥ ब्रह्मादिदेवताश्च एकैकयाज्याहुत्यायक्ष्ये ॥ एवंहोमंसंपाद्य आचार्यंसंपूज्यप्रतिमांदद्यात् ॥ तत्र
मंत्रः ॥ इमांस्वर्णमयींरामप्रतिमांसमलंकृतां ॥ श्रीरामप्रीतयेदास्येप्रीतोभवतुराघवः ॥ इति ॥ ततःव्रतपूर्तयेगांचदत्वासदन्नेनब्रा
ह्मणान्संतर्प्यदक्षिणादिभिः प्रतोष्य आशिषोगृहीत्वास्वयंभुंजीत ॥ ॥ इतिरामनवमीव्रतम् ॥ ॥ अथरामनामलेखनो
द्यापनविधिः भविष्ये ॥ ॥ उमांप्रतिमहादेववचनम् ॥ रामनामलिखेद्यस्तु लक्षकोटिशतावधि ॥ एकैकमक्षरंपुंसांमहापातक
नाशनम् ॥ प्राप्नोतिपरमांसिद्धिं दीर्घायुःपुत्रसंपदमिति तिथ्यादिसंकीर्त्यआत्मनः अनेकपातकक्षयपूर्वकसकलमनोरथावाप्तिद्वा
राश्रीरामचंद्रप्रीत्यर्थंमयालिखितंयत्कोटिलक्षाद्युक्तावधिरामनामतत्संपूर्णतासिद्ध्येतदुद्यापनाख्यंकर्मकरिष्येइतिसंकल्प्य

पूर्ववत्॥ वृताचार्यः ॥सर्वतोभद्रस्थकलशेसाक्षतपूर्णपात्रेषोडशमाषात्मकराजतसिंहासनेस्रुवर्णस्यपलेनतदर्धेनवानिर्मितंरामं-
वामतःसीतांदक्षिणतःलक्ष्मणंपुरतः हनूमंतंचसौवर्णप्रतिमास्रुमूलमंत्रेणनाममंत्रेणचआवाह्यपुरुषसूक्तेनचपूजयेत् ॥परितःसप्त-
धान्योपरिवारिपूर्णानष्टौकलशान्पूर्वादिक्रमेणसंस्थाप्यतेषुलोकेशान्तत्तन्मंत्रैरावाह्यपूजयेत ॥प्रात.अग्निंप्रतिष्ठाप्यान्वादध्यात्अत्र
लेखनदशांशेनशतांशेनवाहोमः अत्रप्रधानं॥ रामंआज्यद्रव्येणलेखनदशांशेनशतांशेनवामूलमंत्रेणपरिवारदेवताः ब्रह्मादिदेवताश्च
एकैकयाज्याहुत्यायक्ष्ये॥ एवंहोमंसंपाद्यआचार्यंसंपूज्यपीठंदद्यात् ॥तत्रमंत्रः॥ सीतासौमित्रिहनुम  द्युतंरामंसदक्षिणं॥दद्-
मिद्विजवर्यायरामोमेप्रीयतामिति ॥ततः व्रतसंपूर्तयेगांचदत्वाघृतपूरितकांस्यपात्रंतिलपात्रंचयथाशक्तिदशदानानिदत्वायोगि-
राजंबटुकत्रयंचअन्यानपिसद्विजान्सदन्नेनसंतर्प्यदक्षिणादिनाप्रतोष्यआशिषोगृहीत्वाइष्टजनैःसहभुंजीत॥ ॥अथभा
द्रपदशुक्लनवम्यांमुहूर्तमात्रसत्वेपिपरयुतायांअदुःखनवमीव्रतंस्कांदोक्तिथ्यादिसंकीर्त्य आत्मनःसकलदुःखनाशपूर्वकअभीष्ट
कामनासिद्धिद्वाराश्रीगौरीप्रीत्यर्थंअदुःखनवमीव्रतंकरिष्ये इतिसंकल्प्य गोमयेनोपलिप्य भूमौवेदींगुडेनलिप्तांइक्षुछादितां

अपूपपायसादियुतांउपरिमंडपिकायुतांकृत्वा तत्रपीठेगौरींगौरी मिमायेतिनमोदेव्याइतिवा मंत्रेण संपूज्य रात्रिंजागरणादिनानये-
त्॥ तद्दिनेहिंसादिरहितंउपोषणंकार्यम्॥ अशक्तश्चेद्दुग्धफलादिभक्ष्यंअत्यंताशक्तश्चेद्धविष्यान्नं॥प्रातःदेवींसंपूज्यसपत्नीकंब्रा-
ह्मणंसंपूज्य॥पंचफलान्वितंवायनंसोपस्करंदद्यात्॥ तत्रमंत्रः॥गौर्यादुःखविनाशिन्याव्रतसंपूर्णहेतवे॥वायनंद्विजवर्यायसहिरण्यं
ददाम्यहं॥ इतिदत्वादेवींविसर्ज्यपीठंदत्वात्रिभ्योऽधिकान्द्विजान्संतर्प्यभुंजीत॥ ॥ अथदशमीव्रतानि॥ ॥ तत्रशुभमा
सस्ययस्यांकस्यांचिच्छुक्लदशम्यांआशादशमीव्रतम्॥ हेमाद्रौभविष्योत्तरे॥ तिथ्यादिसंकीर्त्यआत्मनः अखिलमनोरथावाप्तिपू-
र्वक दशाशास्वरूपी परमेश्वरप्रीत्यर्थंआशादशमीव्रतंकरिष्येइतिसंकल्प्य॥ नक्तंगोमयेनोपलिप्तगृहांगणेयवैःपिष्टातकेनवास्त्रीरूपाः
दशाशास्वरूपाः पुत्तलिकायाः विलिख्यतत्रइंद्रादीन् आयुधवाहनादियुतान् तत्तन्मंत्रैःनाममंत्रैर्वासंपूज्यघृताक्तंनैवेद्यंभक्ष्यभोज्या-
दियुतंदीपांश्चपृथक्पृथक्दापयित्वाकालोद्भवानिफलानिचसमर्प्यप्रार्थयेत्॥ आशास्त्वाशाःसदासंतुसिद्ध्यंतांमेमनोरथाः॥भ-
वतीनांप्रसादेनसदाकल्याणमास्थिताः॥ ततः विप्रंसंपूज्यदक्षिणांदत्वाब्राह्मणभोजनपुरःसरंस्वयंभुंजीत॥ अनेनक्रमयोगेन

मासिमासिसमाचरेत्॥ वर्षांतेचकुरुश्रेष्ठउद्यापनविधिंचरेत्॥उद्यापनंकरिष्येइतिसंकल्प्य॥ वृताचार्यः सर्वतोभद्रे ब्रह्मादिदेवता
आवाह्यतत्रअक्षतपुंजेषुसौवर्णाःरौप्या वादशाशाप्रतिमाःसंस्थाप्यवक्ष्यमाणदशाभिर्मंत्रैःसंपूजयेत्॥ त्वयिसंनिहितःशक्रःसुरा
सुरनमस्कृतः॥पूज्यात्वंभुवनस्यास्यऐंद्रीदिग्देवतेनमः॥अग्नेःपरिग्रहावासेत्वमाग्नेयीतिपठ्यसे॥तेजोरूपापराशक्तिराग्नेयीवर
दाभव॥ धर्मराजंसमाश्रित्यलोकान्संयमतीत्यसौ॥तेनसंयमनीत्वासिवरदात्वंसदाभव॥खड्गहस्तासिविकृतानिर्ऋतिस्थानमा
श्रिता॥ तेननिर्ऋतिनामासित्वमाशांपूरयस्वमे॥ त्वय्यास्तेभुवनाधारोवरुणोयादसांपतिः॥कर्मार्थंममधर्मार्थंवारुणीप्रणवाभव
अधिष्ठितासियस्मात्वंवायुनाजगदायुना॥ वायव्येत्वमतःशांतिंनित्यंयच्छममालये॥ धनदेनाधितिष्ठासिप्रख्यातात्वमिहोत्तरा
निरुत्तराभवास्माकंदत्वासद्योमनोरथान्॥देवेनजगदीशेनशंभुनात्वमलंकृता॥ पूरयस्वशुभेदेविवांछितानिनमोनमः॥ भुजंगा
ष्टकुलेनत्वंसेवितासियतोह्यधः॥नागांगनाभिःसहिताहिताभवममाद्यवै॥सर्वलोकैःपरिगतासर्वदात्वंशिवस्यच॥सनकाद्यैःप
रिवृताद्यौस्त्वंमांपाहिसर्वदा॥ नक्षत्राणिचसर्वाणिग्रहास्तारांगणास्तथा॥नक्षत्रमातरोयाश्चभूतप्रेतविनायकाः॥सर्वेममेष्टसि

ध्यर्थं भवंतु प्रवणाः सदा ॥ एभिर्मंत्रैः संपूज्य ॥ ततः गीतवादित्रमंगलैः पतिपुत्रवतीस्त्रीभिः जाग्रद्भिः सहपुराणपठनादिना चनि
शांनिनयेत् ॥ प्रातः स्नात्वा पूर्ववत्संपूज्य दशमिथुनानि वस्त्रादिना संपूज्य अभावे एकं वा संपूज्य तेभ्यो सौभाग्यद्रव्ययुतं वायनं दक्षि
णायुतं दत्वा आचार्याय पीठं व्रतपूर्तये गां च दत्वा भक्ष्यभोज्यादिना ब्राह्मणान्संतर्प्य दक्षिणादिना प्रतोष्य सुहृन्मंत्र्यादियुतः भुंजीत ॥ य
एवं कुरुते पार्थ दशमीव्रतमादरात् ॥ सर्वान्कामानवाप्नोति मनसो भीप्सितान्नरः ॥ ॥ इति आशादशमीव्रतम् ॥ ॥ अथ भाद्र
पदशुक्लदशम्यां दशावतारव्रतं भविष्ये ॥ ॥ तच्च दशवर्षात्मकं ॥ दशम्यां प्रातः नद्यादौ स्नात्वा नित्यकर्म निर्वर्त्य गृहमागत्य संकल्पं
कुर्यात् ॥ तिथ्यादि संकीर्त्य दशावतारान् दशपरान् पुरुषानात्मानं चोद्धर्तुकामस्तथाश्वेतद्वीपवासपूर्वकनिरतिशयानंदसुखावाप्तये च
दशावतारस्वरूपी परमेश्वरप्रीत्यर्थं दशावतारव्रतं करिष्ये इति संकल्प्य ॥ उक्तविधिना पुण्याहवाचनादि कृत्वा नदीतीरे गृहे वा गोमयो
पलिप्तशुद्धभूमौ चंदनादिना मत्स्यादिदशावतारप्रतिमाः विलिख्य विष्णुमंत्रेण प्रतिष्ठाप्य पुरुषसूक्तेन षोडशोपचारैः पूजयेत् ॥ नैवे
द्यादौ विशेषः ॥ गोधू .दिधान्यचूर्णस्य स्वहस्तप्रसृतित्रयं गृहीत्वा तस्य त्रिंशत्सदार्थाः घृतपाचिताः वक्ष्यमाणसंज्ञिताः कर्तव्याः ॥ त

त्रदशदेवायदशब्राह्मणायदशआत्मनेवर्षेवर्षेभिन्ननामकाः॥ प्रथमेपूरिकाः॥ द्वितीयेअपूपाः॥ तृतीयेअपूपकासाराः॥ चतुर्थेमोदकाः
पंचमेसोहोलिकाः॥ षष्ठेखंडवेष्टकाः॥सप्तमेकोकरसाः॥अष्टमेर्कपुष्पनिभाः॥नवमेकर्णवेष्टकाः॥दशमेमंडकाः॥एवंसंपूज्यनम-
स्कुर्यात्॥ मत्स्यंकूर्मंवराहंचनरसिंहंत्रिविक्रमं॥ रामंरामंचकृष्णंचबौद्धंचैवसकल्किनं॥गतोस्मिशरणंदेवंहरिंनारायणंप्रभुं॥ प्र
णतोस्मिजगन्नाथंसमेविष्णुःप्रसीदतु॥ छिनत्तुवैष्णवींमायांभक्त्याप्रीतोजनार्दनः॥श्वेतद्वीपंनयत्वस्मान्मयात्मासंनिवेदितः॥
ततोब्राह्मणंसंपूज्यदक्षिणासहितंउक्तपदार्थदशकंदत्वातावन्मितंस्वयंमौनीभुंजीत॥एवंदशवर्षप्रतिभाद्रपदशुद्धदशम्यांकृत्वा
अंतेउद्यापनंकुर्यात्॥ तद्यथापूर्वसंकल्पंउक्त्वाऽचरितस्यदशावतारव्रतस्यउद्यापनंकरिष्येइतिसंकल्प्य॥शुचीन्मंत्रविदःदशद्विजा
न्वृत्वाअभावेएकंवृत्वामधुपर्कादिनासंपूज्यततःतेद्विजाःसर्वतोभद्रेउक्तविधिनाब्रह्मादिदेवतास्थापनपूर्वकंकलशप्रतिष्ठांतंकृत्वातत्र
हैमीर्दशप्रतिमाःमत्स्यादिदशावतारस्वरूपाःविष्णुमंत्रेणतत्तन्नाममंत्रेणवाआवाह्यपुरुषसूक्तेनषोडशोपचारैःसंपूज्यपुराणस्तो
त्रैःस्तुत्वाप्रणमेयुः॥ततःयजमानःपूर्वनिमंत्रितान्द्विजान्वस्त्रादिनासंपूज्यक्रमेणताःप्रतिमास्तेभ्यःदक्षिणापुरःसरंदत्वायथा

शक्तिब्राह्मणान्संतर्प्य आशिषो गृहीत्वा स्वयं भुंजीत ॥ ॥ आश्विनशुक्लदशमी विजयादशमी ॥ ॥ सा च तारकोदयव्यापि
नी ग्राह्या ॥ तत्रकृत्यं भविष्ये ॥ गोपथब्राह्मणोक्तं ॥ मंगलवाद्यघोषपुरःसरं सर्वे जनाः भूषणवस्त्रादिधारिणः सीमांतं गत्वा तत्र गणेशं दि
क्पालांश्च संपूज्य शमीं संपूजयेत् तत्रमंत्रः ॥ शमी शमयते पापं शमी लोहितकंटकी ॥ अमंगलानां शमनी शमनी दुष्कृतस्य च ॥ दुःस्व
प्रनाशनी धन्या शमीं तां प्रणमाम्यहं ॥ करिष्यमाणयात्रायां यथाकालं सुखं मम ॥ तत्र निर्विघ्नकर्त्री त्वं भव श्रीरामपूजिते ॥ राजाद
यस्तु आत्मनिवारामसाम्यतां ध्यात्वा रिपुप्रतिकृतिं कृत्वा तां च शरेण छित्वा ब्राह्मणेभ्यो दक्षिणादि दत्वा शमीमूलगतां आर्द्रां मृदं गृ
हीत्वा जयमंगलशब्देन वरस्त्रीभिर्नीराज्यमानो रथवाजिगजपदातीनां प्रेक्षाकौतुकमाचरन् सोत्साहः स्वगृहं विशेत् ॥ ॥ अथ द
शादित्यव्रतं पाद्मे ॥ ॥ यदा यस्मिन्कस्मिन् मासे शुक्लपक्षे रविवासरे दशमी तदा कर्तव्यं ॥ तत्र विधिः ॥ प्रातः नद्यादौ स्नात्वा गृ
हमागत्य संकल्पं कुर्यात् ॥ तद्यथा ॥ तिथ्यादिसंकीर्त्य मम समस्तपापक्षयपूर्वकं पुत्रपौत्रसमुन्नतिधनधान्यगुणोत्कर्षप्राप्त्यर्थं तथा-
इहजन्मनि जन्मांतरे वाज्ञानतो ज्ञानतो वा कृतनतुषास्थिभस्ममुसलसंमार्जनीलंघनकुमारीरजकीरजस्वलावियोनिपशुयोनिब्राह्म

णीगुरुयोषित्गर्भिणीगमनसंध्याकालपर्वकालपुण्यसमयस्त्रीगमनपितृमातृत्यागस्वामिधर्मपत्नीत्यागादिदुष्टकर्मजनितदुर्दशा
निरसनार्थंशुभदशाप्राप्त्यर्थंदशादित्यव्रतंकरिष्येइतिसंकल्प्य॥ गणेशपूजनंपुण्याहवाचनंच कृत्वापीठेनित्यवत्॥ सूर्यंओंकृष्णे
नेतिमंत्रेणावाह्य॥ ध्येयःसदासवितृमंडलेतित्रिमूर्तिरूपिणंध्यात्वापुरुषसूक्तेनषोडशोपचारैःपूजयेत्॥ ततः दशदुर्दशादेवता
पूजनं॥ शुद्धभूमौकृष्णवर्णचूर्णेनमष्यादिनावादशपुत्तलिकाः विलिख्यवक्ष्यमाणदशनामभिः क्रमेण आवाह्यतत्तन्नाममंत्रेण
षोडशोपचारैः पूजयेत् ॥ दुर्दशोनामानि ॥दुर्मुखायैन॰ दुर्मुखांआवा॰ इतिसर्वत्र ॥दीनवदनायै॰मालिन्यै॰सत्यनाशिन्यै॰ सद्बुद्धिनाशि
न्यै॰ हिंस्रायै॰दुष्टायै॰ मित्रविरोधिन्यै॰उच्चाटणकारिण्यै॰ बहुचिंताप्रदायै॰ दुर्दशायै॰ एवंसंपूज्य॥ अनेनमंत्रेणविसर्जयेत्॥
नित्यंपापकरेपापेदेवद्विजविरोधिनि॥ गच्छत्वंदुर्दशेदेविनीतिशास्त्रविरोधिनि॥ ततः तत्पूजा॥ भूमौगोमयेनउपलेपयेत्
स्वयंहस्तपादौप्रक्षाल्य॥ आचम्यप्राणानायम्यतिथ्यादिसंकीर्त्यदशादित्यव्रतांगभूतंदशादित्यदोरकपूजनंकरिष्येइतिसंकल्प्य
शुचौदेशेपंचरंगशोभितंअष्टदलंविरच्यतन्मध्येतंडुलराशिंकृत्वातदुपरिउक्तविधिनापूर्णपात्रयुतंतैजसंकलशंप्रतिष्ठाप्यतत्र-

कुंकुमाष्टदलयुतं वस्त्रं प्रसार्य तत्र दशतंतुमितं दशग्रंथियुतं दोरकं संस्थाप्य दशग्रंथिषु वक्ष्यमाण दशनामभिः देवतावाहनं क्रमेण कु-
र्यात्॥ सूर्यायनमः सूर्यं आवाहयामि॥ एवं सर्वत्र॥ धात्रेन॰ विधात्रेन॰ अर्यम्णेन॰ दिवाकरा॰ भास्कराय॰ भानवे॰ सुवर्णरेतसे॰
तपनाय॰ हंसतुरगाय॰ सवित्रे॰ आदित्याय॰ एतैरेव मंत्रैः षोडशोपचारैः पूजयेत्॥ ततः पूजितं दोरकं पुरुषस्य दक्षिणे करे स्त्रि-
याः वामे बध्वा दशसुदशाः पूजयेत्॥ तत्र चंदनादिना भित्तौ पटे वा दशपुत्तलिका विलिख्य वक्ष्यमाण दशनाम मंत्रेण आवाहयेत्॥
सुबुद्धिदायिन्यै॰ सुखकारिण्यै॰ सर्वसंपत्तिदायिन्यै॰ इष्टभोगदायिन्यै लक्ष्मीदायिन्यै॰ कीर्तिदायिन्यै॰ दुःखनाशिन्यै॰ पुत्रदायिन्यै॰
विजयायै॰ धर्मदायिन्यै॰ इत्यावाह्य प्राणप्रतिष्ठां कृत्वा॥ ततः विशुद्धदर्शनां देवीं वरदाभयदायिनीं॥ ध्यायेद्दशादशां देवीं सर्वाभरण
भूषितां॥ इति ध्यात्वा॥ एतैर्नाममंत्रैः षोडशोपचारैः पूजयेत्॥ ततः प्रार्थयेत्॥ विशुद्धवसने देवि स्थाने चात्र स्थिरा भव॥ इष्ट-
भोगप्रदानाय समग्रं फलमाप्नुयाम्॥ ततः वायनं दद्यात्॥ तद्यथा॥ दशफलान्वितं दशमोदकान्वितं वायनं शूर्पे निधाय वस्त्रदक्षिणा
सहितं ब्राह्मणपूजनपूर्वकं दद्यात्॥ तत्र मंत्रः॥ भास्करो बुद्धिदो दाता द्रव्यस्थो भास्करः स्वयम्॥ भास्करस्तारको भाभ्यां भास्करायन

मोनमः ॥ ततअन्यानपिब्राह्मणान्भक्त्यावस्त्रादिनासंपूज्यव्रतपूर्तयेश्रोत्रियायकुटुंबिनेब्राह्मणायगांचदत्वासदन्नेनविप्रान्संत-
र्प्यआशिषोगृहीत्वादेवंक्षमापयेत् ॥ मंत्रहीनंक्रियाहीनंभक्तिहीनंचतन्मया ॥ पूजितोसिसुरेशानपरिपूर्णंतदस्तुमे ॥ ततःदु
र्दृशानाशनंविश्वरूपिणंभास्वरंध्यात्वादोरकादिविसृज्यतैलादिवर्जितंदशमोदकान्वितंमौनेनभोजनंकुर्यात् ॥ इतिदशादित्यव्रत
म् ॥ ॥ अथदशहराव्रतंस्कांदे ॥ ॥ ज्येष्ठमासेसितेपक्षेदशम्यांबुधहस्तयोः ॥ गरानंदेव्यतीपातेकन्याचंद्रेवृषेरवौ ॥ दशयोगेनरः
स्नात्वासर्वपापैःप्रमुच्यतेइतिवराहपुराणे ॥ दशम्यांशुक्लपक्षेतुज्येष्ठेमासेचजाह्नवी ॥ अवतीर्णायतःस्वर्गाद्धस्तर्क्षेचसरिद्वरा ॥
हरतेदशपापानितस्माद्दशहरास्मृता ॥ स्नानदानादिकंतस्याअनंतफलदायकमिति ॥ ॥ इतिश्रीमच्चित्तपावनकुलाब्धिसंभ
वघारेइत्युपनामकबल्लाळसूरिसूनुविरचितायांव्रतोद्यापनकौमुद्यांदशमीव्रतानिसमाप्तानि ॥ ॥ एकादशीव्रतोद्यापन-
विधिःग्रंथारंभेउक्तःविशेषस्तत्रोच्यते ॥ ॥ अथज्येष्ठशुक्लैकादश्यांनिर्जलैकादशीव्रतं ॥ तद्विधिःस्कांदे ॥ ॥ ज्येष्ठेमासिनृप
श्रेष्ठयाशुक्लैकादशीभवेत् ॥ निर्जलंसमुपोष्यात्रजलकुंभान्सशर्करान् ॥ प्रदायविप्रमुख्येभ्योमोदतेविष्णुसन्निधाविति ॥ तथाभा

रतेभीमसेनंप्रतिव्यासवचनं ॥ वृषस्थेमिथुनस्थे वा शुक्लाह्येकादशीभवेत् ॥ ज्येष्ठमासेप्रयत्नेनउपोष्याजलवर्जिता ॥ उदयादुदयंया
ववर्जयित्वाजलंनरः ॥ अप्रयत्नादवाप्नोति द्वादशद्वादशीर्नृप ॥ ततः प्रभातेविमलेद्वादश्यांस्नानमाचरेत् ॥ जलंस्वर्णंदत्वाच्चद्विजा
तिभ्योयथाविधि ॥ भुंजीतकृतकृत्यस्तु ब्राह्मणैःसहितोवशी ॥ संवत्सरस्ययामध्येएकादश्योभवंत्युत ॥ तासांफलमवाप्नोतिनात्रकार्या
विचारणेति ॥ ॥ इतिनिर्जलैकादशीव्रतं ॥ ॥ आषाढशुक्लैकादश्यांशयन्येकादशीव्रतंब्रह्मपुराणे ॥ ॥ एकादश्यांतुशुक्ला
यामाषाढेभगवान्हरिः ॥ भुजंगशयनेशेतेयद्वक्षीरार्णवे सदा ॥ तदानप्रतिमाकार्यासर्वलक्षणसंयुता ॥ कांचनीराजतीताम्री
चारुपैत्तलकीतथा ॥ पीतांबरधरासौम्यापर्यंके स्वास्तृतेशुभे ॥ स्नापयित्वादधिक्षीरघृतक्षौद्रजलैस्तथा ॥ उपचारैःषोडशकैःपूजयेत्परमे
श्वरं ॥ तत्रमंत्रः सुप्तेत्वयिजगन्नाथेजगत्सुप्तंभवेदिदं ॥ विबुद्धेत्वयिबुद्ध्येतजगत्सर्वंचराचरमिति ॥ रात्रौजागरणंकृत्वाप्रभातेदेवंसंपू
ज्यब्राह्मणान्सदन्नेनसंतर्प्यकिंचिन्नियमान्वितोमौनीभुंजीत ॥ एवमेवप्रबोधिन्यांकार्यं ॥ ॥ इतिआषाढशुक्लैकादश्यांशयन्येका
दशीव्रतं ॥ ॥ अथगोपद्मव्रतं ॥ ॥ कार्तिकशुक्लैकादश्यांद्वादश्यांवाकार्यं ॥ भविष्ये ॥ तिथ्यादिसंकीर्त्यआत्मनोयमदंडनिरसन

पूर्वकपुत्रपौत्रसौभाग्याद्यभिवृद्धिद्वाराश्रीगोपालप्रीत्यर्थंपंचवर्षाचरितगोपद्मव्रतोद्यापनंकरिष्ये॥ ततआचार्यः सर्वतोभद्रस्थकलशेहैमंचतु
र्भुजंगोपालंसंपूज्यइदंविष्णुरितिमंत्रेणप्रार्थयेत्॥ नमस्तेदेवदेवेशनमस्तेगरुडध्वज॥नमस्तेविष्णवेतुभ्यंव्रतस्यफलदायक॥ प्रातर-
ग्निंप्रतिष्ठाप्यअन्वादध्यात्॥गोपालंसमित्तिलपायसाज्ययवद्रव्यैः प्रतिद्रव्यमष्टोत्तरशतसंख्याकाहुतिभिः ब्रह्मादिदेवताश्चैकैकयाज्या
हुत्यायक्ष्ये॥ ततःक्रमेणद्रव्याणांहोमेमंत्राः॥त्रीणिपदा॰ अतोदेवा॰ इदंविष्णु॰ विष्णोर्नुकं॰ तत्सवितुर्वरे॰ ततोवायनंप्रतिवर्षंक्रमेणस
हैववात्रयस्त्रिंशत्संख्याकंदद्यात्॥ प्रथमेपायसं॥ द्वितीयेमंडकान्॥ तृतीयेमाषवटकान्॥ चतुर्थेअपूपान्॥ पंचमेलड्डुकान्॥ वाय
नमंत्रः॥ वायनंतेद्विजश्रेष्ठददामिव्रतपूर्तये॥ दक्षिणादिभिः संयुक्तंगोपालःप्रीयतामिति॥ ततःपंचमिथुनानिवस्त्रादिनासंपूज्य
आचार्यायगांदत्वा॥ एवमेवलक्षगोपद्मव्रतं हवनेविशेषः॥ तद्दशांशेनशतांशेनवा॥पूर्वोक्तपंचद्रव्यैर्मिलित्वाकार्यं॥ वायनंचअन्य
त्समानं॥ ॥इतिगोपद्मव्रतम्॥ अथभीष्मपंचकव्रतं॥ कार्तिकशुक्लैकादश्यांपंचदिनात्मकं॥ पाद्मे॥ तिथ्यादिसंकीर्त्यआ
त्मनोखिलपापक्षयपूर्वकधर्मार्थकाममोक्षचतुर्विधपुरुषार्थसिद्धिद्वाराश्रीपरमेश्वरप्रीत्यर्थंभीष्मपंचकव्रतंकरिष्येइतिसंकल्प्य॥ प

श्विमांसंध्यामुपास्यनदीतीरेगृहेवाच्चतुर्द्वारोपशोभितमंडपेगोमयोपलिप्तवेदिकायांसर्वतोभद्रेप्रस्थतिलोपरिपूर्णपात्रयुतकलशेवासु
देवं ॐनमोभगवतेवासुदेवायेतिमंत्रेणसंपूज्य अहोरात्रंदीपंपंचदिनंदत्वामौनीअष्टशतंद्वादशाक्षरंमंत्रंजप्त्वाऽग्निंप्रतिष्ठाप्य ॐ
विष्णवेनमःस्वाहेतिमंत्रेणाऽष्टोत्तरशतंघृताक्ततिलव्रीहीन् हुत्वास्वयंअंगुष्ठमात्रंगोमयंप्राश्यस्तोत्रपाठादिनारात्रिंनिनयेत् ॥ दिनपं
चकेहोमादिकंसमानं ॥ विशेषःप्रथमेऽन्हिहरेःपादौकमलैःपूजयेत् ॥ स्वयंगोमयभक्षणं ॥ द्वितीयेह्निबिल्वपत्रैर्जानुदेशंहरेःपूजयेत्
त्रिपलंगोमूत्रंस्वयंप्राश्य ॥ तृतीयेह्निनाभिंभृंगारकेनपूजयेत् ॥ पलत्रयंपयःप्राशनं ॥ चतुर्थेह्निबालबिल्वांकुरैःस्कंधौपूजयेत् ॥ पलत्र
यंदधिप्राश्य ॥ पूर्णिमायांमालत्याहरेःशिरःसंपूज्य पलमात्रंसर्पिःप्राशयेत् ॥ मूलमंत्रेणपंचगव्यमंत्रैर्वापंचगव्यप्राशनं ॥ अंतेव्र
तपूर्तयेकपिलांगांदत्वापीठंचदत्वाब्राह्मणान्संतर्प्य ॥ स्वयंभुंजीत ॥ अथप्रकारांतरेणभविष्योक्तं ॥ पूर्वोक्तनियमान्वितः पूर्ववद्वि-
ष्णुंसंपूज्यतद्दक्षिणतस्तिलप्रस्थोपरिलौहींयमप्रतिमांसंपूज्यप्रार्थयेत् ॥ यदन्यजन्मनिकृतमिहजन्मनिवापुनः ॥ पापंमेप्रशमंया
तुतवदेवप्रसादतइति ॥ पंचाहंपंचगव्याशीभीष्मायार्घ्यंपंचस्वप्यहःसुदद्यात् ॥ अनेनमंत्रेण ॥ वैयाघ्रपादगोत्रायसांकृतिप्रवराय

च ॥ अपुत्राय ददाम्येतज्जलं भीष्माय वर्मणे ॥ ॥ अथ मार्गकृष्णैकादश्यां वैतरणीव्रतं ॥ भविष्योत्तरे ॥ तिथ्यादिसंकीर्त्याऽस्म
नो यमलोकादर्शनपूर्वकविष्णुलोकप्राप्तिकामनया परमेश्वरप्रीत्यर्थं वैतरणीव्रतं करिष्ये ॥ वर्षात्मकं व्रतं ॥ स्वयं नित्यकर्म निर्वर्त्य रा-
त्रौ पूर्वाभिमुखीं कृष्णां सुरभिं संस्थाप्य अग्रपादादारभ्य पश्चात्पादद्वयावधि गोपुच्छं समासाद्य पितृतर्पणं कृत्वा शास्त्रविधिना सु-
रभिं पूजयेत् ॥ गोः अग्रपादाभ्यां नमः आस्याय० शृंगाभ्यां० स्कंधाय० पुच्छाय० पश्चिमपादाभ्यां० सर्वांगेभ्यो० इति संपूज्य ॥
मार्गशीर्षादिमासचतुष्टये ओदनं ॥ पुनश्चैत्रादिषु यावकाशनं ॥ पुनः श्रावणादिषु पायसं ॥ तदन्नस्य त्रयो भागा गोर्गुरोः स्वार्थमेव च ॥
एवं प्रतिमासं कृत्वा वर्षांते उद्यापनं कुर्यात् ॥ सर्वोपस्करयुतसारदारुमयीं शय्यां सौवर्णीं सुरभिं आ गावइति मंत्रेण संपूज्य सपत्नीकं
ब्राह्मणं वस्त्रादिना संपूज्य तस्मै भारपरिमितलोहेन सह शय्यायुतां गां दद्यात् ॥ तत्र मंत्रः ॥ यज्ञसाधनभूता या विश्वस्याघौघनाशि
नी ॥ विश्वरूपधरो देवः प्रीयतामनया गवा ॥ ततो दक्षिणात्वेन हिरण्यं दत्वा दीनानाथांश्च तर्पयेदिति ॥ ॥ इति वैतरणीव्रतं ॥
अथ द्वादशमाससंस्थोभयैकादशीव्रतोद्यापनं ॥ भविष्योत्तरे ॥ तिथ्यादिसंकीर्त्य आत्मनः अखिलपापक्षयपूर्वकविष्णुलोकप्राप्त्य

र्थं एकादशीव्रतोद्यापनं करिष्ये ॥ कृतनित्यक्रियो मध्यान्हे सूर्यायार्घ्यं दत्वा मंडले कलशे हैमं केशवं संपूज्य रात्रौ जागरणं कृत्वा प्रातः पं
चगव्यं प्राश्य ब्राह्मणान्संतर्प्य प्रतिमां दत्वा स्वयं भुंजीत ॥ एवमेव शुक्लैकादश्यां द्वादशमासेषु केशवादिद्वादशनामानि क्रमेण ॥ ॥
तथा कृष्णैकादश्यां संकर्षणादिद्वादशनामानि ॥ पूजायां जपादौ ज्ञेयानि ॥ कार्तिकादिक्रमः ॥ मार्गशीर्षादिर्वा ॥ अंते चतुर्विंशतिद्वा
दशैकां वा गां दत्वा यथाशक्ति ब्राह्मणान्भोजयेत् ॥ ॥ इत्युभयैकादशीव्रतं ॥ ॥ इति श्रीम॰ कृतोद्यापनकौमुद्यां एकाद
शीव्रतानि ॥ ॥ अथ द्वादशीव्रतानि ॥ ॥ अथ भाद्रपद शुक्ल द्वादश्यां श्रवणद्वादशीव्रतं ॥ भविष्ये ॥ तच्चैकादशीयुत द्वाद-
श्यां श्रवणयोगे कार्यं ॥ बुधवारयोगे प्रशस्तं ॥ प्रातर्नद्यादौ वरो वरेण्यो वरदो वराहो धरणीधरः ॥ अपवित्रं पवित्रं मां करोतु भगवान्ह
रिरित्यनेन तिलान्विलिप्य स्नात्वा नित्यकर्म निर्वर्त्य संकल्पयेत् ॥ तिथ्यादि संकीर्त्य आत्मनः अखिलपापक्षयपूर्वक पित्राद्यादि दुर्योनि
निरसन द्वारा विष्णुलोक प्राप्त्यर्थं आचरित श्रवणद्वादशीव्रतोद्यापनं करिष्ये इति संकल्प्य ॥ वृताचार्यः ॥ चतुर्द्वारोपशोभितमंडपांतर्वेदि
कायां पीठदेवताः पूजयेत् ॥ आधारशक्त्यै नमः ॥ वमलायै॰ उत्कर्षिण्यै॰ ज्ञानशक्त्यै॰ क्रियाशक्त्यै॰ प्रव्हायै॰ सत्यायै॰ मायायै॰ मध्ये पर

मदेवतायै॰ परितइंद्रादिलोकपालेभ्यस्तदुपरितत्पूर्णपात्रयुतेकलशेगणपतिंदुर्गांक्षेत्रपालंवास्तोष्पतिंपरित आदित्यादिनवग्रहदेवता
भ्यः॰ संपूज्यतदुपरिसर्वतोभद्रंप्रसार्यतत्रब्रह्मादिदेवताः संपूज्यतदुपरिकुशकृष्णाजिनंप्रसार्यतत्रद्रोणपरिमिततिलपर्वतंकृत्वातदलाभे
गोधूमाः तत्रतिलपूरितपूर्णपात्रयु तकलशेह्यादशारयुतपद्मे हैमंवामनंत्रीणिपदेतिमंत्रेणसंपूज्यांगपूजांकुर्यात् ॥ मत्स्यायनमः पा
दौपूजयामि ॥ कूर्माय॰ जानुनी॰ वराहाय॰ गुह्यं॰ नृसिंहाय॰ नाभिं॰ वामनाय॰ उदरं॰ परशुरामाय॰ दक्षिणभुजं॰ दाशरथिरामाय॰ वा
मभुजं॰ कृष्णाय॰ मुखं॰ बौद्धाय॰ कर्णौ॰ कल्किने॰ शिरः॰ ओंनमोभगवतेवासुदेवायसर्वांगंपू॰ ॥ दधिभक्तनैवेद्यं ॥ प्रार्थयेत् ॥ नम
स्तेदितिपुत्रायनमस्तेकश्यपात्मज ॥ त्रिविक्रमायदेवायवामनायनमोनमः ॥ ततोन्यग्रोधंकडुद्रायेतिमंत्रेणसंपूज्य ॥ शिक्यदध्यन्न
नयुतंजलपूरितंकरकंचसंपूजयेत् ॥ तत्रक्रमेणमंत्रौ ॥ शिक्योसिदधिभक्तोसिलंबितोसिमयोपरि ॥ सूत्रेणैवाश्रितोसित्वंवामनःप्रीय
तामिति ॥ करकंपूजयिष्यामिसरितांसंगमेजलैः ॥ पंचरत्नसमायुक्तंतेनतुष्यतुवामनः ॥ ततःसर्वान्प्रार्थयेत् ॥ पर्जन्योवरुणःसूर्यःके
शवःसलिलंशिवः ॥ त्वष्टायमोवैश्रवणःसदापापंहरंतुमे ॥ कथाश्रवणादिनारात्रिंनिनयेत् ॥ प्रातरग्निंप्रतिष्ठाप्यअन्वादध्यात् ॥ अ

त्रप्रधानं॥ वामनंपायसघृतसमित्तिलैः प्रतिद्रव्यमष्टोत्तरशतसंख्याकाहुतिभिः पीठदेवताः ब्रह्मादिदेवताश्चैकैकयाज्याहुत्यायक्ष्ये॥
होममंत्राश्च॥ इरावतीतिमंत्रेणपायसंघृतंच॥ इदंविष्णुरितिसमित्॥ त्रीणिपदेत्याज्यं॥ विष्णोः कर्माणीतितिलाः॥ ततोद्वादशसंख्या
कान्विप्रान्वस्त्रादिनासंपूज्यदध्यन्नोपवीतगोपीचंदनयुतान्सुगंधजलपूरितान्द्वादशकरकांस्तेभ्योदद्यात्॥ तत्रमंत्रः॥ सगंधिजल
संपूर्णंदधिभक्तयुतंद्विज॥ करकंतेप्रदास्यामि वामनःप्रीयतामिति॥ ततः॥ वामनःप्रतिगृह्णातिवामनोवैददातिच॥ वामनस्तारको
भाभ्यांवामनायनमोनमइत्यनेनसोपस्करंपीठमाचार्यायदद्यात्॥ व्रतपूर्त्तयेगांचदत्वाविप्रान्भोजयेत्॥ ॥इतिश्रवणद्वादशी
व्रतम्॥ ॥अथपौषकृष्णद्वादश्यांसुरूपाद्वादशीव्रतं॥ भविष्ये॥ अथवापौषेपुष्यर्क्षेयदातदावाकार्यं॥ तिथ्यादिसंकीर्त्य
आत्मनोदौर्भाग्यदौर्वर्ण्यादिशमनपूर्वक अतुलसौभाग्यपुत्रपौत्राद्यभिवृद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं सुरूपाद्वादशीव्रतंकरिष्ये
वृत्वाचार्यः॥ सर्वतोभद्रस्थतिलोपरिस्थकलशेहैमंलक्ष्मीयुतंविष्णुंसहस्रशीर्षेतिसंपूज्यपरितःशंखंचक्रंगदांपद्मंचसंपूज्यविष्णवेऽ
र्घ्यंदद्यात्॥ नमःपरमशांतायविरूपाक्षनमोस्तुते॥ सर्वसंकष्टनाशायगृहाणार्घ्यंनमोस्तुते॥ ततस्तिलमिश्रितपक्वान्ननैवेद्यंदत्वास्वयं

सुपोष्यरात्रौजागरेत् ॥ प्रातरग्निंप्र॰ अन्वाद॰ ॥ अत्रप्रधानं ॥ विष्णुंगोमयतिलद्रव्यैःप्रतिद्रव्यमष्टोत्तरशतसंख्याकाहुतिभिःब्रह्मादिदेवना
म्नैकैकयाज्याहुत्यायक्ष्ये ॥ श्वेतायाएकवर्णायागामोःअंतरिक्षधृतंगोमयंग्राह्यं ॥ अंगुष्ठार्धमाहुतिप्रमाणं ॥ हवनमंत्राः ॥ सहस्रशी
र्षेतिगोमयं व्याहृतिभिस्तिलान् होमांतेवैष्णवंश्राद्धं कृत्वापीठंगांचदत्वाब्राह्मणान्भोजयेत् इति ॥ अथवारात्रौहोमादिकंकृत्वाप्रा
तःस्वयंपारणंकुर्यात् ॥ ॥ इतितिलरूपाद्वादशीव्रतं ॥ ॥ अथविष्णुपंचकव्रतं ॥ ॥ विष्णुधर्मोत्तरे ॥ तत्रग्रहणवि
धिः ॥ अथभाद्रशुक्लद्वादश्यांयदाश्रवणर्क्षंतदारभ्यवर्षपर्यंतंकार्यं ॥ अथवामार्गेयदाश्रवणर्क्षंतदारभ्यकार्यं ॥ मासेपंचोपोष
णानि ॥ श्रवणेएकादशीद्वयेअमायांपूर्णिमायां ॥ विष्णुंसंपूज्योपवसेत् ॥ एवंसंवत्सरंकुर्यात् ॥ अंतेद्वादश्यामुद्यापनंकुर्यात् ॥ त-
द्यथा ॥ तिथ्यादिसंकीर्त्य आत्मनः पंचमहापातकसकलपातकोपपातकक्षयपूर्वकविष्णुलोकप्राप्तिद्वाराश्रीविष्णुप्रीत्यर्थं आच
रितस्य वर्षपर्यंतंविष्णुपंचकव्रतस्यपूर्णतासिद्ध्यर्थंतदुद्यापनंकरिष्ये ॥ वृताचार्यः सर्वतोभद्रेपंचकलशान्प्रतिष्ठाप्य ॥ तदुपरिसौव
र्णीर्विष्णोःपंचप्रतिमाः मंत्रपंचकेनप्रतिष्ठापयेत् ॥ क्रमेणमंत्राः ॥ त्रीणिपदा॰ श्रवणर्क्षकलशे ॥ तद्विष्णोरितिशुक्लैकादशीकलशे

नद्विप्रासोविपन्यवइनि पूर्णिमाकलशे ॥ अतोदेवाइ निकृष्णैकादशीकलशे ॥ इदंविष्णुरित्यमाकलशे ॥ ततः क्रमेणकलशपंचकेद्वा
दशतत्तद्देवताआवाहयेत् ॥ परिनः गोवर्धनधरं ॥ अनंतं॰ पुंडरीकाक्षं॰ नित्यं॰ वेदगर्भं॰ यक्षंपुरुषं॰ सुब्रह्मण्यं॰ जयं॰ शौरिं॰ वैकुंठं॰
गरुडध्वजं॰ श्रवणस्य॰ केशवं॰ नारायणं॰ माधवं॰ गोविंदं॰ विष्णुं॰ मधुसूदनं॰ त्रिविक्रमं॰ वामनं॰ श्रीधरं॰ हृषीकेशं॰ पद्मनाभं॰
दामोदरं॰ संकर्षणं॰ शुक्लैकादश्याः विधुं॰ शशिनं॰ शशांकं॰ चंद्रं॰ सोमं॰ उडुपं॰ मनोरमं॰ अमृतं॰ पावनं॰ हिमकृतं॰ निशाकरं॰ आप्या
यनं॰ पूर्णिमायाः संकर्षणं ॥ वासुदेवं॰ प्रद्युम्नं॰ अनिरुद्धं॰ पुरुषोत्तमं॰ अधोक्षजं॰ नारसिंहं॰ अच्युतं॰ जनार्दनं॰ उपेंद्रं॰ हरिं॰
कृष्णं॰ कृष्णैकादश्याः ॥ महीधरं॰ जगन्नाथं॰ देवेंद्रं॰ देवकीसुतं॰ चतुर्भुजं॰ गदापाणिं॰ सुरेशं॰ सुलोचनं॰ चार्वंगं॰ चक्रपाणिं॰ सु
रमित्रं॰ असुरांतकं ॥ अमायाः एवंषोडशोपचारैः पूर्वोक्तपंचमंत्रैः संपूज्य षष्टिनामभिः षष्टिन मस्कारान्कृत्वारात्रिंनिनयेत् ॥ प्रात
रग्निंप्रतिष्ठाप्य अन्वादध्यात् ॥ विष्णुंघृताक्तापूप पायसघृतपंचामृततिलद्रव्यैः प्रत्येकंअष्टोत्तरशतसंख्याकाहुतिभिः श्रवणदेव
ताः घृताक्तापूपैः शुक्लैकादशीदेवताः गुडपायसेन पूर्णिमादेवताः घृतपायसाभ्यांकृष्णैकादशीदेवताः पंचामृततिलोदनैः अ

मादेवताश्वतिलमुद्गगुडोदनैः प्रत्येकमेकैकयाहुत्याब्रह्मादिदेवताश्चैकैकयाज्याहुत्यायक्ष्ये ततआचार्यसंपूज्यपीठंव्रतपूर्तयेगांच
दत्वाविभवेसतिसस्यवतींभूमिंचदत्वाअन्यपंचब्राह्मणेभ्योगोमेदंपुष्परागंवैडूर्यंनीलंमाणिक्यंचेतिपंचरत्नानिदक्षिणापुरःसरंस
हिरत्नानीतिमंत्रेणदत्वाषष्टिब्राह्मणान्परमान्नेनसंतर्प्यआशिषोगृहीत्वास्वयंभुंजीत॥ एवंकृतेपंचमहापातकादिभ्योमुक्तोभव
ति॥ ॥इतिविष्णुपंचकव्रतं॥ ॥इतिश्रीमच्चित्तपावन॰ व्रतोद्यापनकौमुद्यांद्वादशीव्रतानि॥ ॥अथत्रयोदशीव्रता-
नि॥ ॥आषाढशुक्लत्रयोदश्यांजयापार्वतीव्रतं॥ भविष्ये ॥विंशतिवर्षात्मकंषट्दिनात्मकंत्र योदशीमारभ्यतृतीया
पर्यंतंप्रत्यहंदेवंपूजयेत् तिथ्यादिसंकीर्त्यआत्मनोवैधव्यनाशाखंडसौभाग्यपुत्रपौत्रादिप्राप्तिद्वाराश्रीउमामहेश्वरप्रीत्यर्थंजया
पार्वतीव्रतंकरिष्ये॥ मंडलेउक्तप्रकारेणकलशोपरिहेमसिंहोपरिस्कवर्णराजतनिर्मितौउमामहेश्वरौगौरीर्मिमायेतितत्पुरुषायेति-
मंत्राभ्यांसंपूजयेत्॥सुवासिनींसंपूज्यस्वयंनक्तंकुर्यात्॥ स्वभक्षणनियमस्तुपंचाब्दंयावनालैः॥पंचाब्दंलवणवर्जितयवैः॥पंचा
ब्दमिक्षुरसवर्जिततंदुलैः॥पंचाब्दंमुद्गैः यूथिकादंतकाष्ठं॥व्रतांतेपायसतिलाभ्यांअष्टोत्तरसहस्रंहुत्वाविंशतिमिथुनानिवस्त्रा

दिनासंपूज्यपक्वान्नसौभाग्यद्रव्ययुतवायनंसदक्षिणाकंदत्वाव्रतपूर्तये आचार्यायगांचदत्वा सर्वरससंयुतंस्वयंभुंजीत ॥ ॥
इतिजयापार्वतीव्रतं ॥ ॥ अथभाद्रशुक्लत्रयोदश्यांगोत्रिरात्रव्रतम् ॥ भविष्ये वर्षत्रयात्मकं ॥ तिथ्यादिसंकीर्त्यसत्पु
त्रप्राप्तिपूर्वकसुखसौभाग्याद्यभिवृद्धिद्वाराश्रीलक्ष्मीनारायणप्रीत्यर्थंगोत्रिरात्रव्रतंकरिष्ये ॥ मंडलेउक्तप्रकारेण सौवर्णीलक्ष्मी
नारायणप्रतिमांपंचामृतपुरःसरंसंपूज्यगांच आगावइतिमंत्रेणसंपूज्य ॥ अहोरात्रंदिनत्रयंघृतदीपंदद्यात् ॥ दिनत्रयमर्घ्यंदा
नेविशेषःक्रमेण बीजपूरं दाडिमं नारिकेरं ॥ प्रत्यहंहविष्यान्नपूरितंकरकंदंपतीभ्यांदद्यात् ॥ पायसोपहारः ॥ स्वयंदिनत्रयमु
पोषणंकार्यं ॥ चतुर्थेह्निपीठंधेनुत्रयंएकांगांतन्मौल्यंवादत्वाब्राह्मणभोजनपुरःसरं स्वयंभुंजीत ॥ एवंचरित्वा अंतेउक्तविधिना
वृताचार्यः मंडलेदेवंसंपूज्यहोमंकुर्यात् ॥ तद्यथा ॥ अग्निंप्रतिष्ठाप्य अन्वादध्यात् ॥ लक्ष्मीनारायणंअष्टोत्तरशतसंख्याकाहुति
भिः पायसद्रव्येणइदंविष्णुरितिमंत्रेणासुरभिंगांच आगावइतिमंत्रेणपायसद्रव्येणाष्टोत्तरशतसंख्याकाहुतिभिर्यक्ष्ये ॥ ततो
वेणुपात्रस्थनालिकेरद्राक्षाखर्जूरदाडिमबीजपूरसौभाग्यद्रव्ययुतंवायनंपूजनदक्षिणापुरःसरंदंपतीभ्योदद्यात् ॥ सवत्सांगां

सालंकाराम् आचार्यायदत्वापीठंचयथाशक्त्याब्राह्मणान्संतर्प्यस्वयंभुंजीत ॥ ॥ इतिगोत्रिरात्रिव्रतं ॥ ॥ अथाशोकत्रि
रात्रिव्रतम् ॥ ॥ यस्मिन्कस्मिन्मासेत्रयोदश्यांशुभतिथौकार्यं ॥ ॥तिथ्यादिसंकीर्त्य आत्मनः शोकदुःखादिनाशपूर्वकाभीष्टफ
लप्राप्तिद्वाराश्रीसीतारामचंद्रप्रीत्यर्थंअशोकत्रिरात्रिव्रतंकरिष्ये इतिसंकल्प्य ॥ मंडलेराजताशोकवृक्षेसौवर्णीः शिवसीतारामलक्ष्मणप्र
तिमास्तत्तन्मंत्रैः संपूज्यअर्घ्यंदद्यात् ॥ तत्रमंत्रः ॥ अशोकवाटिकामध्येसीतयात्वंप्रसादितः ॥ अशोकसंपन्नफलोगृहाणार्घ्यंकृतंमया
॥१॥ गौर्यालक्ष्म्यानथेंद्राण्याअरुंधत्यामहेश्वर ॥ त्वंसमाराधितःपूर्वमशोकफलदोभव ॥२॥ शिवस्य ॥ रावणस्यवधार्थायउत्पन्न
स्त्वंमहीतले ॥ विष्णोरंशोसिदेवेशगृहाणार्घ्यंनमोस्तुते ॥ ३ ॥ रामस्य ॥ तातभक्त्सुन्मुखंचीरंधृत्वायोनवयांवनं ॥ सौमित्रेयमहाभा
गगृहाणार्घ्यंनमोस्तुते ॥ ४ ॥ लक्ष्मणस्य ॥ अवनीतलसंभूतेसीतेसर्वांगसुंदरि ॥ गृहाणार्घ्यंमयादत्तंपूज्येजनकनंदिनि ॥ ५ ॥
सीतायाः ॥ ततःप्रार्थयेत् ॥ अशोकशोकहर्त्तात्वंशोकंनाशयमेप्रभो ॥ मातृपितृपतीनांचश्वशुराणांतथैवच ॥ अशोकस्त्वंशोक-
हरोभवसर्वत्रनःकुले ॥ एवंत्रिरात्रंचरित्वांतेव्रतपूर्तयेगांचदद्यात् ॥ ॥ इतिअशोकत्रिरात्रिव्रतं ॥अथकार्तिकादि

मासेषुत्रयोदश्यांप्रदोषव्रतं ॥ वर्षात्मकंयावज्जीवंवा ॥ ॥शनियोगेमहाफलं ॥ भौमयोगेऋणमोचनं ॥ तिथ्यादिसंकीर्त्य आत्म
नः अखिलपापक्षयशत्रुपराजयपूर्वकायुरारोग्यैश्वर्यपुत्रपौत्राद्यभिवृद्धिद्वाराश्रीउमामहेश्वरप्रीत्यर्थं आचरितप्रदोषव्रतोद्यापनं
करिष्ये ॥ इत्याचार्यः उक्तप्रकारेणलिंगतोभद्रस्थताम्रकलशेरौप्यपूर्णपात्रयुतेसौवर्णसांबसदाशिवंपुरतोराजतंवृषभंतत्तन्म
न्त्रैः प्रतिष्ठाप्य ॥ परितः ॥ असितांगभैरवायनमः १ रुरुभैरवाय० २ चंडभैरवा० ३ क्रोधभैरवाय० ४ उन्मत्तभैरवाय० ५ भीष
णभैरवाय० ६ संहारभैरवाय० ७ कपालभैरवाय० ८ कालभैरवाय० ९ इतिप्रतिष्ठाप्यपूजयेत् मूलमंत्रेणन्यासंकृत्वापंच
ब्रह्ममंत्रैः पूजयेत् ॥ सद्योजातादि० ॥ ५ ॥ प्रकारांतरेणपूजनं ॥ विष्णुं० १ ब्रह्माणं० २ भास्करं० ३ सोमं० ४ पूर्वादिक्रमतः प्रथमाव
रणे ॥ जयं० १ विजयं० २ गणपतिं० ३ दुर्गां० ४ द्वितीये नंदीश्वरं० १ क्षेत्रपालं० २ वास्तोष्पतिं० वायुं० ४ तृतीये सप्तर्षीन् चतुर्थे
भूतनाथं पंचमेइंद्रादीन् षष्ठे कपालिनं सप्तमेगंधर्वान् अष्टमे सद्योजातेत्यासनं वामदेवायेतिपाद्यं अघोरायेत्यर्घ्यं तत्पु
रुषायेत्याचमनीयं ॥ ईशानायेतिस्नानं त्र्यंबकमितिवस्त्रंयज्ञोपवीतंउत्तरीयंपंच नमःसोमायेतिगंधं नमःशंभवेइत्यक्षतान्

इमारुद्रायेतिपुष्पाणि ॥ एवापित्रेतिबिल्वदलानि ॥ मानस्तोकेति धूपं ॥ आतेपितरितिदीपं त्वादत्तेतिनैवेद्यं कद्रुद्रायेतितांबू
लं इमारुद्रायस्थिरधन्वनेइतिदक्षिणां महिक्षयेणक्षम्येतिमंत्रपुष्पं यातेदिद्युदेतिनमस्कारः पुनर्नाममंत्रेण अष्टौप्रदक्षिणान
मस्कारांश्च कुर्यात् ॥ भवाय. १ महादेवाय. २ रुद्राय. ३ नीलकंठाय. ४ शशिमौलिने. ५ उग्राय. ६ भीमाय. ७ ईशानाय. ८ ततो
र्घ्यं रजतादिपात्रेक्षीरकुशघृतदधितंडुलसिद्धार्थगंधपुष्पादिक्षिप्त्वा सजलंदद्यात् ॥ भयरोगादिदारिद्र्यपापक्षुदपमृत्यवः ॥ ऋण
शोकमनस्तापानश्यंतुममसर्वदा ॥ इत्यनेनत्रिवारमर्घ्यंदद्यात् ॥ ततः प्रार्थयेत् ॥ प्रसीददेवदेवेशप्रसीदपरमेश्वर ॥ प्रसीदसोमस
र्वज्ञप्रसीदकरुणाकर ॥ ततोब्राह्मणान्संतर्प्यरात्रिंनिनयेत् ॥ प्रातरग्निंप्रतिष्ठाप्यअन्वादध्यात् ॥ प्रधानंउमामहेश्वरंपलाशंस-
मिद्बिल्वपत्रपायसाज्यद्रव्यैः प्रत्येकमष्टोत्तरशतसंख्याकाहुतिभिः पीठदेवताः ब्रह्मादिदेवताश्चैकैकयाज्याहुत्यायक्ष्ये ॥ ततः पीठं
गांचदत्वाब्राह्मणान्भोजयेदिति ॥ ॥ इतिप्रदोषव्रतं ॥ ॥ अथमार्गशीर्षशुक्लत्रयोदश्यांअनंगत्रयोदशीव्रतं ॥ ॥ व
र्षात्मकंमासिमासिपूजादिकंभिन्नं ॥ तिथ्यादिसंकीर्त्यआत्मनोदुर्भगत्ववंध्यात्वमृतवंध्यात्वादिदोषनिरसनपूर्वकसौभाग्यपु

त्रपौत्रस्फरवप्राप्तिद्वारार्धनारीश्वरमहेश्वरप्रीत्यर्थंअनंगत्रयोदशीव्रतंकरिष्ये इतिसंकल्प्य ॥ उक्तविधिनापीठेअनंगरूपिणंमहेशंपू
जयेत् ॥ विशेषोलिख्यते ॥ सर्वमासेषुत्रयोदश्यामुपोषणं॥ मार्गशीर्षे॥ मल्लिकादंतकाष्ठं॥ नारिंगेणार्घ्यं॥ अनंगोदेवः नैवेद्यंफेणिकाः॥
श्वेतपुष्पं॥ मधुप्राशनं॥ रात्रौजागरणं॥ प्रातर्ब्राह्मणस्ववासिनीभोजनपुरःसरंस्वयंभुंजीत॥ पौषे॥ उदुंबरदंतकाष्ठं॥ जातीपुष्पं॥
दाडिमेनार्घ्यं॥ नाट्येश्वरोदेवः वटकनैवेद्यं॥ चंदनभक्षणं॥ माघे॥ विष्णुक्रांतदंतकाष्ठं॥ कुंदपुष्पं॥ बीजपूरेणार्घ्यं॥ शर्करानैवेद्यं
योगेश्वरोदेवः॥ मौक्तिकभक्षणं॥ फाल्गुने॥ करंजकाष्ठं॥ पद्मपुष्पं॥ खर्जूरीफलं॥ पयोनैवेद्यं॥ वीरेश्वरोदेवः॥ नारिकेरभक्षणं॥
चैत्रे॥ मल्लिकाकाष्ठं॥ दमनकपुष्पं॥ दमनकेनअर्घ्यं॥ खर्जूरीनैवेद्यं॥ विश्वरूपोदेवः॥ कर्पूरभक्षणं॥ वैशाखे॥ अपामार्गकाष्ठं
मल्लिकापुष्पं॥ तेनैवार्घ्यं॥ नैवेद्यमपूपाः॥ महारूपोदेवः॥ जातीफलभक्षणं॥ ज्येष्ठे॥ सहदेवीकाष्ठं॥ बकुलपुष्पं॥ श्रीफलेना
र्घ्यं॥ मंडकनैवेद्यं॥ लवंगभक्षणं॥ प्रद्युम्नोदेवः॥ आषाढे॥ नारिंगकाष्ठं॥ कदंबपुष्पं॥ नालिकेरेणार्घ्यं॥ उमापतिर्देवः॥ तिलबी
जभक्षणं॥ श्रावणे॥ जातीकाष्ठं॥ पद्मपुष्पं॥ जंबूफलेनार्घ्यं॥ क्षीरसारंनैवेद्यम्॥ शूलपाणिर्देवः गंधोदकभक्षण॥ भाद्रपदे॥

कंकर्ताकाष्ठं॥ चंपकपुष्पं॥ दाडिमेनार्घ्यं॥ पूगफलैर्नैवेद्यं॥ सद्योजातोदेवः॥ अगरुभक्षणं॥ आश्विने॥ कंकतीकाष्ठं॥ करवीरपुष्पं
कर्कटीफलेनार्घ्यं॥ त्रिदशाधिपोदेवः॥ शुष्कमंडकनैवेद्यं॥ कनकांबुप्राशनं॥ कार्तिके॥ कदंबकाष्ठं॥ रक्तोत्पलपुष्पं॥ कूष्मांडेना
र्घ्यं॥ पूरिकानैवेद्यं॥ जगदीश्वरोदेवः॥ दमनकभक्षणं॥ सर्वत्रप्रदोषपूजनंभक्षणंच॥ एवंचरित्वांतेउद्यापनंकुर्यात्॥ वृताचार्यः
लिंगतोभद्रस्यकलशेसौवर्णमर्धनारीश्वरंमहेशंपूजयेत्॥ प्रातरग्निंप्रतिष्ठाप्यअन्वादध्यात्॥ महेशंपायसद्रव्येणअष्टोत्तरा
धिकसहस्रमष्टोत्तरशतंवातत्संख्याकाहुतिभिः ब्रह्मादिदेवताश्चैकैकयाज्याहुत्यायक्ष्ये॥ ततः छत्रोपानहकमंडलुभाजनवस्त्र
पुरःसरंआचार्यंसंपूज्यततद्वादशाष्टौचत्वारिवादंपतीन्संपूज्यपीठंगांचआचार्यायदत्वाब्राह्मणभोजनपुरःसरंस्वयंभुंजीत॥
॥ ॥इत्यनंगत्रयोदशीव्रतं॥ ॥इतिश्रीमच्छि॰ व्रतकौस्तुभेत्रयोदशीव्रतानि॥ ॥ अथचतुर्दशीव्रतानि॥ ॥अथ
नृसिंहजयंतीव्रतं॥ ॥वैशाखशुक्लचतुर्दश्यांप्रदोषव्यापिन्यांनृसिंहजयंतीव्रतं॥ ॥स्वातीनक्षत्रशनिवारसिद्धयोगवणिज
करणयोगेमहापुण्यदं॥ तिथ्यादिसंकीर्त्यआत्मनःअखिलपापक्षयपूर्वकशत्रुजयस्फरधनावाप्तिद्वाराश्रीनृसिंहप्रीत्यर्थंआ-

चरितस्यनृसिंहजयंतीव्रतस्योद्यापनंकरिष्ये॥ इतिसंकल्प्य वृताचार्यः सर्वतोभद्रस्यकलशेहैमंलक्ष्मीनृसिंहं ॐ नमोनृसिंहाये
तिमूलमंत्रेणगायत्र्यावाप्रतिष्ठाप्योक्तविधिनासंपूजयेत्॥ प्रातरग्निंप्रतिष्ठाप्यअन्वादध्यात्॥ लक्ष्मीनृसिंहंविष्णोर्नुकमितिमंत्रे
णाअतोदेवेतिवाअष्टोत्तरशततिलपायसाज्याहुतिभिः ब्रह्मादिदेवताश्चैकैकयाज्याहुत्यायक्ष्ये॥ ततःपीठंव्रतपूर्तयेगांचआ
चार्यायदत्वाब्राह्मणान्भोजयेदिति॥ ॥ नृसिंहजयंतीव्रतं॥ ॥ अथानंतव्रतं॥ ॥ तच्चभाद्रपदशुक्लचतुर्दश्यां चतुर्द-
शवर्षात्मकंयावज्जीवंवा॥ तच्चत्रिमुहूर्तोदयव्यापिन्यांकार्यं॥ तिथ्यादिसंकीर्त्यआत्मनोनिखिलपापक्षयनिर्मुक्तिपूर्वकोत्तमसि
द्धिपुत्रपौत्रपूरितविविधभोगधनधान्यपरमगतिप्राप्तिकामनयाचतुर्दशवर्षाचरितानंतव्रतोद्यापनंकरिष्येइतिसंकल्प्य॥ नित्य
वत्स्वयंदेवंसंपूजयेत्॥ ततोवृताचार्यःसर्वतोभद्रेब्रह्मादिदेवताआवाह्यतदुपरिकलशंप्रतिष्ठाप्यतत्रयमुनामावाह्यश्रीसूक्तेन
नाममंत्रेणवासंपूज्य॥ तदुपरिअक्षतपूरितपूर्णपात्रंनिधायतत्राष्टदलंविरच्यतत्रस्वर्णनिर्मितंचतुर्दशग्रंथियुतंअनंतंसहस्र
शीर्षेतिमंत्रेणस्थापयेत्॥ तदुत्तरतःसप्तधान्योपरिविस्तृतशय्यायांस्वर्णनिर्मितंलक्ष्मीसहितंहैमंहलमुसलयुतंअनंतंदेवं॥ अ

नोदेवाइति ॥ इदंविष्णुरितिमंत्रेणस्थापयेत् ॥ स्वर्णदोरकप्रतिमयोः पुरुषसूक्तेनश्रीमदनंतायनमइतिनाममंत्रेणवापूजावार्षिक
वत्कार्या ॥ अथग्रंथिदेवताः पूजयेत् ॥ क्रमेण ॥ विष्णुः १ अग्निः २ आदित्याः ३ सहस्राक्षः ४ पितामहाः ५ इंद्रः ६ पिनाकी ७ वि
घ्नेशः ८ स्कंदः ९ सोमः १० वरुणः ११ पवनः १२ पृथ्वी १३ वसवः १४ ततः शय्यायांप्रतिमायाः परितः शंखं १ चक्रं २ गदां ३ पद्मं
४ तद्बहिर्नाममंत्रेण अनंतं १ कपिलं २ दक्षं ३ मनुं ४ प्रजापतिं ५ संकर्षणं ६ कालं ७ वनमालिनं ८ त्रिविक्रमं ९ अहोरात्रं १० अ
र्धमासं ११ मासं १२ ऋतून् १३ अयने १४ संवत्सरं १५ इंदुवारं १६ अनुवत्सरं १७ वत्सरं १८ प्रजाध्यक्षं १९ अजितं सर्वभूतं २१ प्र
द्युम्नं २२ अनिरुद्धं २३ श्रीधरं २४ पुरुषोत्तमं २५ वामनं २६ पद्मनाभं २७ विश्वरूपं २८ त्रिविक्रमं २९ विष्णुं ३० अच्युतं ३१ तद्ब
हिरष्टवसून् ८ तद्बहिरेकादशरुद्रान् ११ तद्बहिर्द्वादशादित्यान् १२ तद्बहिर्नवग्रहान् ९ तद्बहिरष्टभैरवान् ८ तद्बहिर्मेषादिद्वादशराशी
न् १२ तद्बहिरश्विन्यादिनक्षत्राणि २८ तद्बहिर्ब्राह्म्यादिसप्तमातृः ७ तद्बहिश्चैत्रादिद्वादशमासान् १२ तद्बहिर्दीप्त्यादिशक्तीः तद्ब
हिर्विष्कंभादियोगान् २७ आवाह्यपीठपरितः फलपक्वान्नपूरितांश्चतुर्दशकुंभांश्चचतुर्दशनामभिः स्थापयेत् पूजयेच्च ॥ तेचमंत्राः

अनंतायनमः १ संकर्षणाय॰ २ कमलाय॰ ३ शेषाय॰ ४ वासुदेवाय॰ ५ विश्वनाथाय॰ ६ विश्वरूपाय॰ ७ पद्मनाभाय॰ ८ दामोदराय॰ ९
जगन्नाथाय॰ १० चतुर्भुजाय॰ ११ श्रीकंठाय॰ १२ केशवाय॰ सर्वात्मनेन॰ १४ ततः पुष्पपूजोत्तरंकलशस्थापनोक्तचतुर्दशनामभिः
अंगानिपूजयेत्॥ अनंताय॰ पादौपूजयामि॥ संकर्षणाय॰ गुल्फौ॰ कालाय॰ जंघे॰ शेषाय॰ जानुनी॰ वासुदेवाय॰ ऊरू॰ विश्वाय॰
गुह्यं॰ विश्वरूपाय॰ कटिं॰ पद्मनाभाय॰ नाभिं॰ दामोदराय॰ उदरं॰ जगन्नाथाय॰ हस्तद्वयं॰ चतुर्भुजाय॰ बाहू॰ श्रीकंठाय॰ कंठं॰ के
शवाय॰ ललाटं॰ सर्वात्मने॰ शिरः॰ अनंताय॰ सर्वांगं॰ ततः नमस्तेदेवदेवेशनमस्तेधरणीधर॥ नमस्तेसर्वनागेंद्रअनंतायनमोन
मइतिनमस्कारः॥ ततःप्रार्थयेत्॥ अनंतकामान्मेदेहिसर्वकामफलप्रद॥ अनंतायनमस्तुभ्यंपुत्रपौत्रान्प्रवर्धय॥ व्रतेनानेनसंतुष्टोभ
वत्विहसदाममा॥ ततःपुराणपठनादिनारात्रिंनिनयेत्॥ प्रातरग्निंप्रतिष्ठाप्यअन्वादध्यात्॥ अत्रप्रधानंश्रीमदनंतमश्वत्थसमित्ति
लव्रीहियवघृतपायसद्रव्यैःप्रत्येकमष्टोत्तरशतसंख्याकाहुतिभिः पीठदेवताः आवरणदेवताश्चैकैकयाज्याहुत्यापायसाहुत्यावाब्रह्मा
दिदेवताश्चैकैकयाज्याहुत्यायक्ष्ये॥ स्थापनमंत्रैर्होमः॥ केचिद्दिवैवहोममिच्छंति॥ प्रातर्ब्राह्मणभोजनमात्रम्॥ दिवैवसर्वम्॥ ततः

पीठंसंपूज्यवस्त्रादिनाचार्यंसंपूज्यपीठंदद्यात्॥ तत्रमंत्रः॥ प्रतिगृण्हद्विजश्रेष्ठसमस्तफलदायक॥ त्वत्प्रसादादहंविप्रविमुच्येभवबं
धनात्॥ अनंतःप्रतिगृण्हातिअनंतोवैददातिच॥अनंतस्तारकोभाभ्यांअनंतायनमोनमः॥ततःपूर्वेद्युर्निमंत्रितान्चतुर्दशब्राह्मणा
न्वस्त्रादिनासंपूज्यस्थापितन्चतुर्दशकलशान्पक्वान्नादिपूरितान्दक्षिणासहितान्तेभ्यःप्रतिगृण्हद्विजश्रेष्ठेतिमंत्राभ्यांदद्यात्॥
व्रतपूर्तयेगांचदद्यात्॥ क्षमापयेत्॥ क्रियाहीनंभक्तिहीनंद्रव्यहीनंतथैवच॥मंत्रहीनंकृतंयच्चपरिपूर्णंतदस्तुमे॥ततोब्राह्मणभो
जनपुरःसरंस्वयंभुंजीत॥ ॥इत्यनंतचतुर्दशीव्रतं॥ ॥अथकदलीव्रतोद्यापनं॥ भविष्ये॥ ज्येष्ठशुक्लचतुर्दश्यामुक्तं॥
तत्रैवपुनःकार्तिकेमाघेवैशाखेवाकार्यं॥ अथवास्तादिरहितेपुण्यमासेपौर्णमास्यांवाकार्यं॥ स्कांदेतु ज्येष्ठशुक्लत्रयोदश्यामु-
क्तं॥ तत्रैवत्रिदिनमुपोष्य॥पौर्णमास्यामधिवासनमुक्तं॥तत्रैवयस्मिन्देशेकदलीनलभ्यतेतदास्वर्णकदलींकृत्वाविधिनापूजाहो
मादिकंकृत्वादद्यादित्युक्तं॥ ॥अथप्रयोगः॥ तत्रव्रतीपूर्वेद्युरेकभुक्तोनक्ताशीवाद्वितीयेह्निनद्यादौस्नात्वापंचगव्यंप्राश्यसंक
ल्पंकुर्यात्॥ तिथ्यादिसंकीर्त्यात्मनइहजन्मनिजन्मांतरेवासौभाग्यारोग्यपुत्रपौत्रान्नलक्ष्मीवृद्धिसर्वदुःखनाशनपूर्वकंउमाम

हेश्वरपदप्राप्तिकामः कदलीव्रतोद्यापनंकरिष्ये इतिसंकल्प्य यदाज्येष्ठादिद्वादशमासेषूक्तपूजादिनकृतंतदोद्यापनदिनेआ-
दौक्रमेणपूजादिकंकुर्यात् ॥ कदल्याआलवालंकृत्वाउपरिमंडपंचतुर्द्वारंकृत्वापूजयेत् ॥ तत्रज्येष्ठे ॥ जातीदंतकाष्ठं ॥ गौरीतिक
दलीनाम ॥ पाटलपुष्पं ॥ कदल्यैकामदायिन्यैमेधायैचनमोनमः ॥ रंभायैभूतसारायैसर्वसौख्यप्रदेनमः ॥ सर्वमासेष्वयंपूजामंत्रः
एवंषोडशोपचारैः संपूज्योत्तमोदकेनसिंचयेत् ॥ तत्रमंत्रः ॥ यथारंभे विवृद्धिस्तुशाखादीनांसदाभवेत् ॥ तथावर्धयमांदेविसेचना
त्पार्वतीप्रिये ॥ ततःप्रार्थयेत् ॥ यथायथाहिप्रसवोवर्धतेकदलीतव ॥ तथामनोरथानांमेप्रभवोभवतुस्वयं ॥ आषाढे ॥ क्रमेणदं
तकाष्ठंकदलीनामपुष्पंच ज्ञेयं ॥ करंजं ईश्वरीबिल्वपत्रं ॥ श्रावणे कुमुदं कुमुदा भाद्रेपुत्तलिका भगवती कदंबः आश्विने
मालती अतुला जाती कार्तिके शतपत्रं कीर्तिः शतपत्रं मार्गशीर्षे चंपकं मार्गदायिनी चंपकं पौषे कमलं पुष्टिकरी कमलं माघे
दाडिमं माहेश्वरी दाडिमं फाल्गुनेमधुकं मदोत्कटा मधुकं चैत्रे मल्लिका चैतन्यरूपा मल्लिका वैशाखे अपामार्गं विमला बहु
विधपुष्पाणि द्वादशमासेषुक्रमेणधूपान्नैवेद्यांश्च चंदनं कर्पूरं गुग्गुलं काश्मीरं देवदारुधूपं दशांगं गुग्गुलं देवदारुं गोरोचनं

मेषशृंगं॥ वटकाः उदुंबराः अपूपाः मोदकाः मंडकं पायसं घृतोदनं॥ मुद्गचूर्णं सोहोलिका खंडवेष्टिका फेनिका दध्योदनं एवंस्वयंसं
पूजयेत्॥ वृताचार्यः कदलीमूलेदेशेमृदावेदींविधायतत्रलिंगतोभद्रेउक्तविधिनाब्रह्मादिदेवताआवाह्यतदुपरिकलशस्थपूर्णपात्रेहैमं
शिवंगौरींचत्र्यंबकमितिकद्रुद्रायेतिवागौरीर्मिमायेतिगायत्र्यावामंत्राभ्यांप्रतिष्ठाप्यपूजयेत् पुरतोवृषभंराजतंच ततःकदलींपूजये
त्॥ कदल्यैकामदायिन्यैइत्यनेन कदलीपरितोलोकपालानावाह्य॥ ततस्तैलहरिद्रादिनामंगलस्नानंकृत्वास्त्रीभूषणैर्भूषयित्वाआवा
हनाद्युपचारैःसंपूजयेत्॥ पुरतः आदर्शंचामरंछत्रंच उपरिपूरिकाबंधनं॥ परित इक्षुदंडवेष्टनं॥ कदल्याश्चतुर्दिक्षु गुडपिष्टाच
लं जीरकं॥ लवणं॥ शुभ्राक्षताः ततःपुराणपठनादिनारात्रिंनिनयेत्॥ प्रातरग्निंप्रतिष्ठाप्यअन्वादध्यात्॥ अत्रप्रधानं॥ शिवंगौरीं
कदलींचपलाशसमिन्मधुसर्पिस्तिलव्रीहिद्रव्यैःप्रत्येकमष्टोत्तरसहस्रमष्टोत्तरशतमष्टाविंशतिर्वातत्संख्याकाहुतिभिःब्रह्मादिदेवता
श्चैकैकयाज्याहुत्या क्रमेणहोममंत्राः कद्रुद्राय॰ गौरीर्मिमाय॰ ॐ आंह्रींक्लींकामिन्यैविद्महेत्रैलोक्यक्षोभिण्यैधीमहि॥ तन्नःकदली
प्रचोदयात्॥ ततउत्तरपूजांकृत्वाप्रार्थ्य॥ उमेगौरि नमस्तुभ्यंनमस्तेविश्वधारिणि॥ परमानंदरूपिण्यैकदल्यैतेनमोनमः॥ ततःचतुर्वि

शतिः षोडशाष्टौ यथाशक्त्या वा मिथुनानि वस्त्रादिना संपूज्य वंशपात्रस्थ सौभाग्यद्रव्ययुतं फलदक्षिणादियुतं वायनं दद्यात् ॥ त-
तः आचार्याय संपूज्य पीठं कदलीं च दद्यात् ॥ तत्र मंत्रः कदलीं कामदात्रीं च सर्वसौख्यप्रदायिनीम् ॥ गिरिजाहररूपां वै ब्राह्मणाय
ददाम्यहं ॥ प्रतिगृण्ह द्विजश्रेष्ठ समस्तफलदायक ॥ कदल्यास्त्व प्रदानेन पूर्णाः संतु मनोरथाः ॥ कदली प्रतिगृण्हाति कदली वै ददाति
च ॥ कदली तारका चैव कदल्यै तेन मो नमः ॥ कदलीदानसांगतासिद्ध्यर्थं हिरण्यदक्षिणात्वेन दद्यात् ॥ व्रतपूर्तये गां च दत्वाऽन्या-
न् ब्राह्मणान् दक्षिणादिभिः प्रतोष्य ब्राह्मणान्सदन्नेन संतर्प्य आशिषो गृहीत्वा स्वयं भुंजीत ॥ ॥ इति कदलीव्रतं ॥ ॥ अथ वै
कुंठचतुर्दशीव्रतं ॥ ॥ कार्तिकशुक्लचतुर्दश्यां अरुणोदयव्यापिन्यां कार्यं ॥ तिथ्यादि संकीर्त्य आत्मनः सर्वपापक्षयपूर्वक शि
वपदप्राप्तिकामनयाऽचरितवैकुंठचतुर्दशीव्रतोद्यापनं करिष्ये ॥ वृताचार्यः लिंगतोभद्रस्थकलशे हैमं विश्वेश्वरं पूजयेत् प्रात
रग्निं प्रतिष्ठाप्य घृताक्ततिलैः अष्टोत्तरशतं ॐ नमः शिवायेति मंत्रं हुत्वा व्रतपूर्तये गां च दद्यात् ॥ ॥ इति वैकुंठचतुर्दशीव्रतम् ॥
अथ शिवरात्रिव्रतं ॥ स्कंदपुराणे ॥ चतुर्दशवर्षात्मकं यावज्जीवं वा ॥ माघे कृष्णचतुर्दश्यां निशीथव्यापिन्यां कार्यम् ॥ ॥

तिथ्यादिसंकीर्त्य आत्मनः सर्वपापक्षयपूर्वकं अक्षयभोगमोक्षप्राप्त्यर्थं आचरितशिवरात्रिव्रतोद्यापनं करिष्ये ॥ वृताचार्यः ॥ अन्यै
र्द्वादशब्राह्मणैः सहपूजामारभेत् ॥ द्वादशलिंगोद्भवेपीठेउक्तविधिनाब्रह्मादिदेवताः संपूज्य द्वादशलिंगेषु द्वादशकलशान्मध्ये एकं
तदुपरिपूर्णपात्राणिनिधायतत्रहैमीः प्रतिमाः पूजयेत् ॥ तत्रमध्यमकुंभेउमामहेश्वरं त्र्यंबकमिति मंत्रेणप्रतिष्ठाप्यपुरतोराज
तंवृषभंचप्रतिष्ठापयेत् ॥ ततोद्वादशब्राह्मणान्द्वादशलिंगस्थकलशेषु द्वादशप्रतिमाः पूजयेयुः तत्रप्राच्यां महेशं अघोरं पशु
पतिं दक्षिणस्यां पंचवक्त्रं उग्रं रुद्रं पश्चिमायां भवं शर्वं शंभुं उत्तरे शिवं भीमं भीमपराक्रमं प्रतिकलशंपरितोलोकपा
लान् इतिप्रतिष्ठाप्य रुद्राभिषेकपूर्वकं षोडशोपचारैः पूजयेत् प्रतियामंपूजाकार्या एकैववा ॥ पुराणपठनादिनारात्रिंनिन
येत् ॥ प्रातरग्निंप्रतिष्ठाप्यअन्वादध्यात् ॥ अत्रप्रधानं उमामहेश्वरं पायसबिल्वपत्रतिलदूर्वाघृतद्रव्यैः प्रत्येकं अष्टोत्तरशतसंख्या
काहुतिभिः द्वादशकलशस्थद्वादशदेवताः अष्टाष्टसंख्याकाहुतिभिः तैरेवद्रव्यैः परिवारदेवताः ब्रह्मादिदेवताश्चैकैकयाज्याहुत्या
यक्ष्ये ॥ एवंहोमंसंपाद्यपीठदेवतांपूजयेत् ॥ अथअंगपूजा ॥ शर्वायनमः ॥ पादौपूजयामि ॥ पशुपतये॰ ऊरूपू॰ रुद्राय॰ क

टिंपू॰ शर्वाय॰ बाहू॰ सद्योजाताय॰ कंठं॰ शंभवे॰ मुखं॰ वामदेवाय॰ चक्षुषी॰ भीमाय॰ भ्रुवौ॰ उमापतये॰ ललाटं॰ सर्वव्यापिने॰
मूर्धानं॰ ततआचार्यंद्वादशब्राह्मणांश्चवस्त्रादिनासंपूज्य तेभ्यःप्रतिमासहितकलशान्दद्यात्॥ तत्रमंत्रः॥शंभोप्रसीददेवेशस
र्वलोकेश्वरप्रभो॥ तवरूपप्रदानेनममसंतुमनोरथाः॥ ततोव्रतपूर्त्त्यैत्रयोदशगाः॥अथवाएकांगांआचार्यायान्येभ्योदक्षिणांद
द्यात्॥ ब्राह्मणान्संतर्प्यस्वयंभुंजीत॥ लिंगपुराणेतुप्रकारांतरेणउक्तं॥ मंडलेउमामहेश्वरंसंपूज्यप्रातःपूर्वोक्तरीत्यातिलव्री
हियवैरष्टोत्तरशतंहोमंहुत्वाचतुर्दशब्राह्मणांश्चतुर्दशनामभिःसंपूज्यजलपूरितचतुर्दशकलशान्वस्त्रदक्षिणासहितान्दद्यात्
चतुर्दशनामानि॥ अजैकपादहिर्बुध्न्योभवःशर्वउमापतिः॥ रुद्रःपशुपतिःशंभुर्वरदःशिवईश्वरः॥ महादेवोहरोभीमोनामा
न्येवंचतुर्दश॥ एतैर्होमःप्रकर्तव्यःकुंभदानेपितान्स्मरेत्॥ अष्टाहुतिसंख्याकोबिल्वपत्रैर्होमः॥ अन्यत्समानं॥ ॥ इतिशि
वरात्रिव्रतम्॥ ॥अथमलमासव्रतं॥ पाद्मे॥ मलमासस्यकृष्णपक्षेचतुर्दश्यांत्रयोदश्यांअष्टम्यांवातृतीयायांनवम्यां
वाऽन्यतमतिथौवाकार्यं॥ तिथ्यादिसंकीर्त्यआत्मनोदारिद्र्यपापदुःखनाशनसत्पुत्रप्राप्तिपूर्वकातुलभोगसिद्धयेसवितृरूपजना

र्दनप्रीत्यर्थंचमलमासव्रतंकरिष्यइतिसंकल्प्य॥ मध्याह्नेसर्वतोभद्रस्थकलशेहैमंलक्ष्मीयुतंजनार्दनंसंपूज्यनानाविधपक्वान्नैर्नै
वेद्यंदद्यात्॥ फलपुष्पोपेतंअर्घ्यंदद्यात्॥ तत्रमंत्रः॥ देवदेवजगन्नाथमलयोसन्निकारक॥ गृहाणार्घ्यंमयादत्तंकृपांकुरुममोपरि
ततःसपत्नीकंब्राह्मणंवस्त्रादिनासंपूज्यत्रयस्त्रिंशदपूपान्कांस्यपात्रेनिधायसघृतंसहिरण्यंवायनंब्राह्मणायनिवेदयेत् तत्रमं
त्रः॥ विप्रायवेदविदुषेश्रोत्रियायकुटुंबिने॥ नरकोत्तारणार्थायमह्यच्युतःप्रीयतामिति दत्वाछत्रोपानद्भूषणाछादनादियुतांशय्यां
चदत्वापीठंघृतपूर्णंयंगांचदत्वानानाविधपक्वान्नैर्ब्राह्मणान्संतर्प्यआशिषोगृहीत्वास्वयंभुंजीत॥ ॥ इतिश्रीमच्चित्त० व्रतो
द्यापनकौमुद्यांचतुर्दशीव्रतानि॥ ॥ अथपौर्णिमासीव्रतानि॥ ॥ तत्रज्येष्ठशुद्धपूर्णिमायांपूर्वविद्धायांवटसावित्रीव्रतं॥
तच्चत्रयोदशीमारभ्यपूर्णिमांतंकर्तव्यम्॥ तदुक्तंस्कंदभविष्ययोः॥ पूर्णिमायांवाकार्यं॥ तत्रविधिः॥ तद्यादौतिलामलकरजनी
विलेपनपूर्वकंस्नात्वावार्षिकवत्पूजादिकंनिर्वर्त्यउद्यापनसंकल्पंकुर्यात्॥ तद्यथा॥ तिथ्यादिसंकीर्त्यममभर्तुःपुत्रादीनांचआयु
रारोग्यैश्वर्यादिप्राप्तिपूर्वकमिहजन्मनिजन्मांतरेचआत्मनःअवैधव्यप्राप्तयेआचरितवटसावित्रीव्रतोद्यापनंकरिष्येइतिसंक

ल्य॥ कृताचार्योवटमूलेगृहेवामृदावेदींविधायतत्रसर्वतोभद्रंविरच्यतत्रब्रह्मादिदेवताःसंपूज्यतत्रकलशद्वयंप्रतिष्ठाप्यतत्रैकस्मिन्
कलशेहैमंब्रह्मजज्ञानमितिमंत्रेणब्रह्माणंगायत्रीमंत्रेणहैमींसावित्रींचप्रतिष्ठाप्यतदुत्तरद्वितीयकुंभेपलादधिकरजतस्यराजतप-
र्यंकेहैमीःसत्यवत्सावित्रीयमनारदप्रतिमाःनाममंत्रैरावाह्यपुरतःकाष्ठभारंकुठारंचहैमंराजतंवानिधायपूजयेत् अशक्तावेक-
स्मिन्कलशेसर्वेषांपूजनं॥ पुष्पोत्तरमंगपूजा॥ सावित्र्यैनमः॥ पादौपूजयामि॥प्रसावित्र्यैन॰जानुनी॰ कमलपत्राक्ष्यै॰कटिं॰भू
तधारिण्यै॰उदरं॰गायत्र्यै॰कंठं॰ब्रह्मप्रियायै॰शिरःपू॰ अथब्रह्मसत्यवतोः धात्रे॰पादौ॰ परमेष्ठिनेनम॰ जानुनी॰ अग्निरूपा
य॰कटिं॰ वेधसे॰उदरं॰हिरण्यगर्भाय॰कंठं॰ चतुराननाय॰ मुखं॰ ब्रह्मणे॰शिरःपू॰ मंत्रपुष्पानंतरमर्घ्यंदद्यात्॥रजतादिपात्रेणद्व
योरपि ॐकारपूर्वकेदेविवीणापुस्तकधारिणि॥वेदमातर्नमस्तेस्तुअवैधव्यंप्रयच्छमे॥पतिव्रतेमहाभागेभर्तुश्चप्रियवादिनि अ
वैधव्यंचसौभाग्यंदेहित्वंममसुव्रते॥ पुत्रान्पौत्रांश्चसौख्यंचगृहाणार्घ्यंनमोनमः॥अथब्रह्मसत्यवतोः॥त्वयासृष्टंजगत्सर्वंसदेवा
सुरमानुषं॥ सत्यव्रतधरोदेवब्रह्मरूपनमोस्तुते॥ अथयमाय॥ त्वंकर्मसाक्षीलोकानांशुभाशुभविवेककृत्॥ वैवस्वतगृहाणार्घ्यं

धर्मराजनमोस्तु ते ॥ नारदाय ॥ नारदायनमस्तुभ्यं सुरेशाद्यभिवंदित ॥ गृहाणार्घ्यंमयादत्तमवैधव्यंप्रयच्छमे ॥ ततः प्रार्थयेत् ॥ सा
वित्रीब्रह्मगायत्रीसर्वदाप्रियभाषिणि ॥ तेनसत्येनमांपाहिदुःखसंसारसागरात् ॥ मयाकृतंमहाघोरंजन्मांतरशतैरपि ॥ भस्मीभ
वतुतत्सर्वंअवैधव्यंचदेहिमे ॥ ब्रह्मसत्यवतोः ॥ अवियोगोयथादेवसावित्र्यासवितस्तव ॥ अवियोगस्तथास्माकंभूयाज्जन्मनिज
न्मनि ॥ सावित्र्याः ॥ सावित्रित्वंयथादेविचतुर्वर्षशतायुषं ॥ पतिंप्राप्तासिगुणिनंममदेवितथाकुरु ॥ यमस्य ॥ कर्मसाक्षीजगत्पूज्य
सर्ववंद्यप्रसीदमे ॥ संवत्सरंव्रतंसर्वंपरिपूर्णंतदस्तुमे ॥ ततः सुवासिनीः संपूज्यगायनादिलाकथाश्रवणादिनारात्रिंनिनयेत् ॥ प्रा-
तरग्निंप्रतिष्ठाप्यअन्वादध्यात् ॥ सावित्रींगायत्रीमंत्रेणपायसघृतदूर्वातिलव्रीहिद्रव्यैःप्रत्येकमष्टोत्तरशतसंख्याकाहुतिभिः ब्रह्मा
णंधर्मराजंनारदंचव्याहृतिमंत्रेणतिलव्रीहियवद्रव्यैःप्रत्येकमष्टोत्तरशतसंख्याकाहुतिभिःब्रह्मादिदेवताश्चैकैकयाज्याहुत्यायक्ष्ये
सत्यवत्सावित्र्योर्ब्रह्मसावित्र्योरैक्यात्पृथक्होमादिकंनास्ति ॥ पूजादौतत्तन्मंत्राभ्यामेवतयोः पूजेत्युक्तत्वात् ॥ एवंहोमंसंपाद्यत
तश्चतुर्विंशतिर्द्वादशाष्टौचत्वारिवामिथुनानिवस्त्रादिनासंपूज्यपूरिकामोदकमंडकादिकूष्मांडनालिकेरमातुलिंगदाडिमबीजपूरा

दिफलहरिद्राकुंकुमकेशविचूर्णिकाकज्जलकंठसूत्रकंकणमौक्तिकपादभूषणवस्त्रकंचुकीआदर्शनपात्रादिदक्षिणातांबूलादियुत
शूर्पविहितंवायनंदद्यात्॥ तत्रमंत्रः॥ सोपस्करंद्विजश्रेष्ठव्रतसंपूर्तिकारकं॥ वायनंतेप्रयच्छामिसावित्रीप्रीयतामिति॥ ततःपीठं
व्रतपूर्तयेगांचदत्वाब्राह्मणान्संतर्प्यआशिषोगृहीत्वाइष्टजनैःसहभुंजीत इयानत्रविशेषः॥ रात्रावरुंधतींदृष्ट्वासंपूज्यार्घ्यंदद्या
त्॥ अरुंधतिनमस्तेस्तुवसिष्ठस्यप्रियेशुभे॥ पुत्रान्देहिसुरवंदेहिगृहाणार्घ्यंनमोस्तुते॥ इतिदत्वाभुंजीत॥ ॥ इतिवटसा
वित्रीव्रतं॥ ॥अथद्वात्रिंशत्पौर्णमासीव्रतम्॥ ॥ भाषयाबत्तिशीपौर्णमासीत्युच्यते॥ ॥तदुक्तंभविष्ये॥ ॥ पूर्णि-
मामार्गशीर्षस्यतस्यामारभ्यतेव्रतं॥ उमयासहितोदेवः पूजनीयोमहेश्वरः॥ एकैकंदीपकंकृत्वामासिमासिचदापयेत्॥ एवंसार्ध
द्वयंवर्षंद्विमासाधिकमाचरेत्॥ नभसः पूर्णिमायांचकुर्यादुद्यापनंततः॥ अथवाशुभमासस्यपूर्णिमायांसमापयेत्॥ चतुर्दश्यामु
पवसेद्रात्रौपूजनमारभेत्॥ तिथ्यादिसंकीर्त्यआत्मनः इहजन्मनिजन्मांतरेचवैधव्यनाशपुत्रपौत्रसौभाग्यादिमासिपूर्वकंभर्तु
रायुर्वृद्धिद्वाराउमामहेश्वरप्रीत्यर्थंआचरितस्यद्वात्रिंशत्पौर्णमासीव्रतस्यपूर्णतासिद्ध्यर्थंउद्यापनाख्यंकर्मकरिष्ये॥ इत्याचार्यः

लिंगतौभद्रस्थकलशेहैमंउमामहेशं ॐ नमःशिवायेतिमंत्रेणस्थापयेत्पूजयेच्च॥ प्रातरग्निंप्रतिष्ठाप्यअन्वादध्यात्॥ उमा
महेशंयवतिलाज्यद्रव्यैः प्रत्येकमष्टोत्तरशतसंख्याकाहुतिभिः ब्रह्मादिदेवताश्चैकैक याज्याहुत्यायक्ष्ये॥ ततोद्वात्रिंश द्वंधनयु
तवंशपात्रेव्रीह्युपरिस्थेद्वात्रिंशन्महादीपान्द्वात्रिंशत्फलवस्त्रदक्षिणादियुतान्कृत्वादद्यात्॥ मंत्रः॥ महेशःप्रतिगृण्हाति
महेशोवैददातिच॥ महेशस्तारकोभाभ्यांमहेशायनमोनमः॥ द्वात्रिंशद्भिःफलैर्दीपैःसंयुतंवस्त्रवेष्टितम्॥ वाणकंतववृतुष्ट्यर्थंददा
मिगिरिजापते॥ ततोद्वात्रिंशद्ब्राह्मणान्सदन्नेनसंतर्प्यआशिषोगृहीत्वास्वयंभुंजीत॥ ॥ इतिद्वात्रिंशत्पूर्णिमाव्रतं॥
अथकोकिलाव्रतं॥ ॥ तदुक्तंभविष्ये॥ ॥ यस्मिन्वर्षेआषाढद्वयंतदाशुद्धाषाढपूर्णिमायांव्रतग्रहणं॥ श्रावणपूर्णिमा
यांसमापनं॥ अशक्तेनदिनाष्टकंत्रिदिनंवाकार्यं॥ ॥ तत्रविधिः॥ दिनाष्टकंहरिद्राकुंकुमलेपनपूर्वकंनतस्तिलामलकैः ततः स
र्वौषधिभिस्ततोवचापिष्टेनततस्नानमंत्रेण॥ स्नास्येहंपरयाभक्त्यासस्नुहिग्धाकुरूपतः॥ सौभाग्यसंदरंरूपंकुरुजन्मनिजन्म
नि॥ ततःस्नात्वासूर्यायार्घ्यंदत्वागृहेपूजांकुर्यात्॥ तद्यथा॥ ममेहजन्मनिजन्मांतरेचसर्वपापक्षयपूर्वकपुत्रपौत्रावैधव्य

निःसापत्न्यलक्ष्मीसौभाग्यरूपलावण्याद्यभिवृद्धिद्वारागौरीरूपाकोकिलाप्रीत्यर्थंकोकिलाव्रतंकरिष्यइतिसंकल्प्य कोकिलांपू
जयेत् ॥ तद्यथा ॥ सौवर्णींरौप्यपादांमौक्तिकनेत्रांप्रवालसुखींपंचरत्नपृष्ठींराजतचूतवृक्षस्थांपक्षिरूपिणींकोकिलांकृत्वाति
लपूरितताम्रपात्रे निधाय पूजयेत् ॥ अशक्तौतिलपिष्टमयींवाकुर्यात् ॥ तस्याःप्रत्यहंविसर्जनं ॥ धातुमय्यांविकल्पः चूतंच
पक्ववृक्षस्थांस्वर्णपक्षादिसंयुताम् ॥ चिंतयेत्पार्वतींदेवींकोकिलारूपधारिणीं ॥ इतिध्यात्वा ॥ श्रीसूक्तेनगौरीर्मिमायेतिमंत्रे
णनाममंत्रेणवापूजयेत् ॥ तिलस्नेहेतिलसुखेतिलसौख्येतिलप्रिये ॥ सौभाग्यंधनपुत्रांश्चदेहिमेकोकिलेनमः ॥ इत्यर्घ्यमं
त्रः ॥ पुष्पोत्तरमंगपूजा ॥ शिवायैनमः शिरःपूजयामि वनवासिन्यै० ललाटंपू० स्वरूपायै० भ्रूमध्यं० पार्वत्यै० चंचुंपू० तिर्यग्रूप
धारिण्यै० कंठंपू० कोकिला० हृदयं० पक्षिरूपिण्यै० गुह्यं० पद्मवत्यै० पादौ० कृष्णावर्णायै० सर्वांगंपू० कोकिलेकृष्णवर्णेत्वंसदा
वससिकानने ॥ भवान्यैहरकांतायैकोकिलायैनमोनमः ॥ नमस्कारः ॥ पुनरर्घ्यं ॥ अर्घ्यंगृहाणदेवेशिवांछितार्थप्रदायिनि ॥
आषाढस्यासितपक्षेमेघवर्णेहरप्रिये ॥ कोकिलेत्वंजगन्मातर्गृहाणार्घ्यंनमोस्तुते ॥ ततःप्रार्थयेत् ॥ रूपंदेहिजयंदेहिसौ

भाग्यं देहि मे सदा ॥ पुत्रान्देहि धनं देहि सर्वान्कामान् कुरुष्व मे ॥ काकवंध्या विवत्सा च मृतवंध्या च दुःखदा ॥ तास्तु वैफल्यतां यांतु को
किले त्वत्प्रसादतः ॥ त्वया लब्धः पतिर्लोके शंकरो लोकशंकरः ॥ अतोहं त्वत्प्रसादेन लभेयं पतिमुत्तमं ॥ ततो गुडमिश्रिततिलानां
वायनं दद्यात् ॥ देव्यै तिलगुडमिश्रितपक्वान्ननैवेद्यं प्रदोषकाले पूजनं ॥ स्वयं तिलगुडभक्षणं हविष्याशनं वा ॥ ततो विस
र्जनं ॥ देवि चैत्ररथोसन्ने विंध्यपर्वतवासिनि ॥ अर्चिता पूजितासि त्वं कोकिले हरवल्लभे ॥ कोकिले कलकंठासि माधवे मधुर-
स्वरे ॥ वसंते वससे देवि गच्छ त्वं नंदनं वनं ॥ इति मंत्रेण विसर्जनं ॥ अथवा न कुर्यात् ॥ अंते कुर्यात् ॥ एवं मासपर्यंतं चरित्वांते पूर्णि
मायामुद्यापनं कुर्यात् ॥ तद्यथा ॥ पूर्वोक्तसंकल्पं कृत्वा आचरितकोकिलाव्रतसांगतासिद्धये कोकिलारूपिणीगौरीप्रीत्यर्थं तदु
द्यापनाख्यं कर्म करिष्ये ॥ वृताचार्यः ॥ एकलिंगोद्भवे भद्रे ब्रह्मादिदेवताः संस्थाप्य तदुपरि प्रस्थपरिमितसप्तधान्योपरि ताम्रं कृ
ष्णवस्त्रवेष्टितकलशं प्रतिष्ठाप्य तदुपरि एकविंशतिबंधात्मकतिलपूर्णवंशपात्रं निधाय तत्र पूर्वोक्तलक्षणां हैमीं कोकिलां गौरी
र्मि मायेति मंत्रेण प्रतिष्ठाप्य पूर्वोक्तप्रकारेण पूजयेत् ॥ अशक्तस्तु मासपर्यंतं पूजितामेवाधिवासयेत् ॥ रात्रौ जागरणं कृ

त्वा प्रातरग्निं प्रतिष्ठाप्य अन्वादध्यात् ॥ अत्र प्रधानं ॥ कोकिलारूपिणीं गौरीमिमायेति मंत्रेण तिलचंपकपुष्पतंदुलपायसाज्यद्रव्यैः प्र
त्येकमष्टोत्तरशतसंख्याकाहुतिभिः तथाव्याहृतिमंत्रेण बिल्वपत्रैः शतत्रयपरिमिताहुतिभिर्ब्रह्मादिदेवताश्चैकैकयाज्याहुत्यायक्ष्ये
एवं होमं संपाद्य पंचमिथुनानि संपूजयेत् अशक्तो द्वयं ॥ तेभ्यो गुडतिलमिश्रितपक्वान्नपूरितकरकयुतं सौभाग्यद्रव्यदक्षिणान्वि
तं वंशपात्रस्थं कृष्णोर्णावस्त्रवेष्टितं वायनं दद्यात् तत्र मंत्रः ॥ सोपस्करं द्विजश्रेष्ठ वायनं व्रतपूर्तये ॥ ददामि ते गृहाणेदं कोकिला प्रीयता
मिति ॥ ततः पीठं व्रतपूर्तये गां च दत्वा ब्राह्मणान् दक्षिणादिभिः प्रतोष्य आशिषो गृहीत्वा भुंजीत ॥ ॥ इति कोकिलाव्रतं ॥
अथ भाद्रपदपूर्णिमायामुमामहेश्वरव्रतं ॥ ॥ शिवरहस्ये ॥ तत्र पूर्वेद्युः सायं शिवं संपूज्य हविष्याशी शिवध्यानपरो देवस-
न्निधौ निद्रां कुर्यात् ॥ प्रातर्नद्यादौ स्नात्वा नित्यकर्म निर्वर्त्य भस्मोद्धूलितसर्वांगो देवागारं प्रविश्य तिथ्यादि संकीर्त्य आत्मनोऽशेषपापस्स
य दुःखदारिद्र्यनाशपूर्वकं शिवपदप्राप्तिकामनया उमामहेश्वरव्रतं करिष्य इति संकल्प्य ॥ चतुर्द्वारोपशोभितमंडपे भद्रपीठे कल-
शं प्रतिष्ठाप्य तत्र पूर्णपात्रे प्रतिसरग्रंथिकुशं गव्याक्तं कुंकुमांकितं पंचदशग्रंथियुतं दोरकं निधाय तत्र सौवर्णं राजतं वा पलादधिकं प्रतिमा

अं॰ कौ
६६

इयंउमामहेश्वरयोः त्र्यंबकंगौरीर्भिमायेतिमंत्राभ्यांप्रतिष्ठाप्यविध्युक्तप्रकारेणपूजयेत् ॥ अथध्यानं ॥ पंचाननसुमाकांतमनलेंदुर-
विभ्रमं ॥ चंद्रार्धशेखरंनित्यंजटामुकुटमंडितम् ॥भस्मोद्धूलितसर्वांगंरुद्राक्षाभरणान्वितं ॥ ऋतंसत्यंपरंब्रह्मविष्णुब्रह्मादिवंदितं ॥
विश्वंविश्वेश्वरंदेवंध्यायामिपरमेश्वरं ॥ ध्यायामिपरमांगौरीमादिविद्यांसुरेश्वरीं ॥ लक्ष्मीसेवितपादाब्जांचंद्रार्धकृतशेखरां ॥ब्रह्मे
द्रोपेंद्रजननींमहेशार्धांगभागिनीं ॥ प्रसन्नवदनांशांतांध्यायेद्देवीसुमांसतीं ॥ एवंध्यात्वापंचब्रह्ममंत्रैःषोडशोपचारैःपूजयेत् ॥ पु
ष्पोत्तरमंगपूजा ॥ कपर्दिनेनमः ॥ कपर्दंपूजयामि ॥भाललोचना॰ भालं॰ सोमसूर्याग्निलोचना॰ नेत्राणि॰ श्रुतिश्रोत्रा॰ श्रोत्राणि॰ घ्रा
णगंधाय॰ घ्राणानि॰ स्मृतिदंताय॰ दंतान्॰ श्रुतिजिव्हाय॰ जिव्हां॰ भीमाय॰ कपोलौ॰ शर्वाय॰ ओष्ठौ॰ नीलकंठ॰ कंठं॰ भूरिवक्षसे
न॰ वक्षांसि॰ हिरण्यबाहवेन॰ बाहून्॰ विश्वोदराय॰ उदरं॰ रुद्रायन॰ कटिं॰ पशुपत॰ जानुनी॰ उग्राय॰ गुल्फौ॰ महतेन॰ पादौ॰ शि
वाय॰ सर्वांगं॰ पृथुवेण्यै॰ वेणीं॰ सीमंतराजितायै॰ सीमंतं॰ नीलकुंतलायै॰ कपोलौ॰ कुड्मलदंतायै॰ दंतान्॰ जिव्हायै॰ जिव्हां॰
बिंबोष्ठायै॰ ओष्ठौ॰ कंबुकंठयै॰ कंठं॰ पृथुलकुचायैनमः कुचौ॰ विश्वगर्भायै॰ उदरं॰ शुभकट्यै॰ कटिं॰ दिव्योरुदेशायै॰ ऊरू॰ वृत्त

६६

जंघायै॰ जंघे॰ लक्ष्मीसेवितपादुकायै॰ पादौ॰ महेश्वरप्रियायै॰ नखान्॰ शोभनविग्रहायै॰ सर्वांगंपू॰ एवंपूजांसमाप्य ॥ प्रथमग्रंथिमा
रभ्यदोरकसर्वग्रंथिषुबिल्वदलादिभिरुमामहेशौनिमंत्रयेत् ॥ प्रत्येकंक्रमेणसंपूज्यपंचदशग्रंथिषुगोधूमांस्तंडुलान्वानिधापयेत् ॥
ततोदोरकधारणं ॥ ततोगोघृतपाचितगोधूमापूपानांवायनंमंडकानांवा ॥ पात्रेपंचदशमंडकान्संस्थाप्यसदक्षिणंवायनंदद्या
त् ॥ तत्रमंत्रः ॥ उमेशःप्रतिगृण्हातिउमेशोवैददातिच ॥ उमेशस्तारकोभाभ्यांउमेशायनमोनमः ॥ ततःपीठंदत्वासदन्नेनशैवान्
ब्राह्मणान्संतर्प्यवाग्यतःस्वयंभुंजीत ॥ एवंपंचदशवर्षप्रतिसंवत्सरंचरित्वांतेउद्यापनंकुर्यात् ॥ पूर्वोक्तफलावाप्तये आचरि
तोमामहेश्वरव्रतपूर्तयेतदुद्यापनंकु॰ ततःपंचदशशैवान्द्विजान्निमंत्र्यदेवस्थापयेत् वृताचार्यः लिंगतोभद्रेपंचदशपीठेषुपंचदशकुंभान्व
स्त्रयुग्मवेष्टितान्कृत्वापुराणपठनादिनारात्रिंनिनयेत् ॥ प्रातःऋत्विक्सहितःसुखाचार्यःअग्निंप्रतिष्ठाप्यअन्वादध्यात् ॥ उमा
महेशौघृताक्तपायसद्रव्येणपंचदशसहस्रंपंचदशशतानिवातत्संख्याकाहुतिभिःब्रह्मादिदेवताश्चैकैकयाज्याहुत्यायक्ष्ये ॥ होम
मंत्रः ॥ उमामहेश्वरायनमःस्वाहेतिवेदोक्तावा ॥ ततोद्विजान्वस्त्रादिनासंपूज्यपीठंतेभ्योवायनानिचदत्वाव्रतपूर्तयेपंचदशगा

स्तन्मौल्यंवादत्वाअन्यान्द्विजान्सुवासिनीश्चसंपूज्यदेवंप्रार्थयेत्॥ उद्यापनंकृतंशंभोमयैतदधुनाप्रभो॥ इदंसंपूर्णतांयातुत्वत्प्रसा
दान्महेश्वर॥ मंत्रहीनंभक्तिहीनंशक्तिहीनंचयत्कृतं॥ सांगंभवतुतत्सर्वंतवैवस्मरणात्प्रभो॥ ततःआशिषोगृहीत्वावाग्यतइष्टजनैः
सहभुंजीत॥ इत्युमामहेश्वरव्रतं॥ ॥अथाश्विनपूर्णिमायांकोजागरव्रतं॥ स्कांदे ॥ तिथ्यादिसंकीर्त्यआत्मनःस्वकु
लस्यचाखंडलक्ष्मीप्राप्तिपूर्वकसुखादिप्राप्तयेलक्ष्मीप्रीत्यर्थंकोजागरव्रतंकरिष्ये॥ रात्रौमंडलेसक्तुभिर्वृतितउनेतिमंत्रेणलक्ष्मीं॰
इंद्रंनरोनेतिमंत्रेणमत्तैरावतस्थमिंद्रं आवाह्यसंपूजयेत्॥ परितोदीपान्घृतेनतैलेनवालक्षंतदर्धंतदर्धंवायथाशक्तिवादत्वावीथी
चतुष्पथेवादत्वानालिकेरोदकमात्रंप्राश्याक्षैर्दीव्यन्नुत्सवेनरात्रिंनिनयेत्॥ प्रातर्घृतशर्करापायसादिनाब्राह्मणान्संतर्प्यदक्षिणांद
त्वाशिषोगृहीत्वाइष्टजनैःसहभुंजीत॥ ॥इतिकोजागरव्रतं॥ ॥अथकार्त्तिकशुक्लचतुर्दश्यांपौर्णमास्यांवाकूष्मांडीव्रतं
भविष्ये॥ अन्यस्मिन्शुभमासेवाकार्यं॥ तत्रव्रतविधिः॥ वैशाखसितचतुर्दश्यांशुभदेशेकूष्मांडीरोपणंषण्मासावधिषण्
नाममंत्रैःप्रत्यहंक्रमात्पूजयेत्॥ सौभाग्यदायिन्यै॰ सर्वकामदायै॰२ पुत्रदायै॰३ धनदायै॰ अभीष्टफलदायै॰५ मोक्षदायै॰६ एवं

षण्मासं संपूज्य फलादियुतायां सत्यां उद्यापनं कुर्यात् ॥ उद्यापनदिने वाक्रमात् ॥ षण्मासिकपूजा आदौ कार्या ॥ तिथ्यादि संकीर्त्य
आत्मनः सत्पुत्रप्राप्तिपूर्वक अतुललक्ष्मी सुखाभिवृद्धिद्वारा ब्रह्मसावित्रीप्रीत्यर्थं कूष्मांडीव्रतोद्यापनं करिष्ये ॥ ततो वृताचार्यः
कूष्मांडी परितो मंडपं विरच्य पताकादिभिर्भूषयित्वा तन्मूले हैमीं फलपुष्पादियुतां कूष्मांडीं संस्थाप्याभ्यंग स्नानं कृत्वा भूषणैर्भू
षयित्वा पूजयेत् तत्पुरतः सर्वतोभद्रे ब्रह्मादिदेवतास्थापनपूर्वकं कलशं प्रतिष्ठाप्य तत्र हेमप्रतिमे ब्रह्मसावित्र्यो ब्रह्मजज्ञानं प्रणोदे
वीति मंत्राभ्यां प्रतिष्ठाप्य पूजयेत् ॥ कूष्मांडीपूजनमंत्रः ॥ कूष्मांड्यै कामदायिन्यै ब्रह्माण्यै ते नमो नमः ॥ नमोऽस्तु सुखदात्र्यै च सा
वित्र्यै ते नमो नमः ॥ रात्रौ जागरणं कृत्वा प्रातरग्निं प्रतिष्ठाप्य अन्वादध्यात् ॥ ब्रह्माणं सावित्रीं च घृततिलद्रव्येण प्रत्येकमष्टोत्तरशत
संख्याकाहुतिभिः ब्रह्मादिदेवताश्चैकैकयाज्याहुत्या यक्ष्ये ॥ स्थापनमंत्राभ्यां होमः ॥ ततोऽष्टौ चत्वारि वा मिथुनानि वस्त्रादिना सं
पूज्य फलसौभाग्यद्रव्ययुतं वायनं तेभ्यो दत्वा सपत्नीकं ब्राह्मणं संपूज्य तस्मै कूष्मांडीं दद्यात् ॥ तत्र मंत्रः ॥ कूष्मांडीं बहुबीजाढ्यां
वस्त्रालंकारभूषितां ॥ दक्षिणाकलशोपेतां हैमकूष्मांडिसंयुताम् ॥ सावित्रीब्रह्मसंप्रीत्यै गृहाण द्विजसत्तम ॥ ततः पीठं व्रतपूर्त

येगांचदत्वाब्राह्मणान्संतर्पयेदिति ॥ ॥इतिकूष्मांडीव्रतं॥ ॥अथकार्तिकपूर्णिमायांसौभाग्यव्रतम्॥ ॥विष्णुध
र्मोत्तरे॥ विधिवन्नद्यादौस्नात्वानित्यकर्मनिर्वर्त्यततःतिथ्यादिसंकीर्त्यममेहजन्मनि अखंडितसुखसौभाग्यधनधान्यलक्ष्मीभ
र्तृपुत्रायुर्वृद्धिद्वाराश्रीपरमेश्वरप्रीत्यर्थंसौभाग्यव्रतंकरिष्ये॥ ॥भूमौकेशरादिसुगंधद्रव्ययुतगंधेनषोडशपत्रात्मकंपद्मंविरच्य
तत्रदेवताआवाहयेत्॥ मध्येलक्ष्मीनारायणंकेशरेसप्तविंशतिनक्षत्राणि॥पूर्वादिक्रमपत्रेषु॥अग्निं॰ब्रह्माणं॰अंबिकां॰गणपतिं
नागं॰स्कंदं॰विरोचनं॰शिवं॰दुर्गां॰यमं॰इंद्रं॰विष्णुं॰ कामेशं॰शिवं॰इंदुं॰ पितरंच १६सप्तऋषीन्एताःदेवताःस्थाप्यसंपूज्य ॥
मोदकंमंडकंपायसंदध्नाअपूपैश्चदिनेनैवेद्यंदत्वाविविधफलानिदत्वापूजांतेब्राह्मणायवस्त्रयुग्मंदद्यात्॥सदन्नेनब्राह्मणान्भोजये
द्दक्षिणांदद्यात्॥ स्वयंउपवासीनभोजनंवाकार्यं॥सौभाग्यदंरूपविवर्धनंचलावण्यदंस्त्रीरतिभोगदंच कार्यंप्रयत्नेननरेंद्रपुंसांका
र्यम् तथास्त्रीभिरदीनसत्व॥ ॥इतिसौभाग्यवृद्धिकरव्रतम्॥ ॥अथमहाफलव्रतम्॥ ॥कार्तिकशुद्धप्रतिपदामार
भ्यपौर्णिमापर्यंतं॥ अथवावैशाखतृतीयायांआश्विनशुक्लेनवाऽरभेत्॥दंतधावनपूर्वकंदश स्नानविधिपुरःसरंनद्यादौस्नात्वा

पंचगव्यंप्राश्य ॥ तिथ्यादिसंकीर्त्यआत्मनःअखिलपापक्षयपूर्वकधर्मार्थकाममोक्षचतुर्विधपुरुषार्थसिध्यर्थंश्रीपरमेश्वरप्रीत्यर्थं
महाफलव्रतंकरिष्ये ॥ विष्णुंविधिपुरःसरंसंपूज्यद्वादशाक्षरमंत्रंअष्टोत्तरसहस्रंजप्त्वानिनयेत् ॥ प्रतिपदि॰ क्षीराशनः ॥ सप्त-
म्यां॰ अष्टम्यां॰ नवम्यां॰ पिष्टाशी॰ दशम्यां॰ हविष्याशी॰ एकादश्यां॰ उपवासः॰ द्वादश्यां॰ घृताशी॰ पयोहारः॰ त्रयोदश्यां॰ पौ
र्णमास्यांकुशोदकप्राशनं ॥ एवंप्राशनविधिः ॥ अनेनविधिनापक्षमेकंयोवर्त्तयति ॥ अश्वमेधफलंप्राप्नोति ॥ मासपर्यंतं॰
मन्वंतरंयावत्स्वर्गेवसति ॥ चतुष्टयेतु॰ राजसूयानांशतगुणफलमाप्नोति ॥ संवत्सरमाचरेदिति ॥ सवितुर्लोकेअनंतकालंप्रति
वसति ॥ यतीब्रह्मचारीगृहस्थोवानप्रस्थोनारीसौभाग्यवतीविधवानरोवाशक्तिः प्रयतमानसःपुष्पदंतविभुसात् कोऽर्ध्यंव्रज
तिपुष्पदंतविभुःसूर्यः ॥ ॥ इतिभविष्यपुराणोक्तंमहाफलव्रतं ॥ ॥ अशोकपूर्णिमाव्रतंविष्णुधर्मोक्तं ॥ ॥ फा-
ल्गुनीशुक्लपूर्णिमामारभ्यतिथ्याद्युल्लिख्यनद्यादौविधिवत्स्नात्वानित्यकर्मनिर्वर्त्यममेहजन्मनिअखिलशोकापच्छांतिपूर्व
कसकलबाधानिवृत्तिकरैश्वर्यारखंडितसौभाग्यपुत्रपौत्राद्यभिवृद्ध्यर्थंअशोकपूर्णिमाव्रतंकरिष्ये ॥ स्नात्वाशिरसिमृत्तु

त्वापुनः स्नात्वा भूमौमृत्स्थंडिलंविरच्यमध्येभूमिरूपंधरणींध्यात्वापूजयेत्प्रार्थयेच्च॥ यथाविशोकंधरणीकृतवास्त्विजनार्दन॥ तथामांसर्वलोकेभ्योमोचयेत्शोकधारिणी॥ यथासमस्तभूतानामाधारणेव्यवस्थिता॥ तथाविशोकंकुरुमांसकलेच्छाभिभूतिभिः॥ ध्यानमात्रेयथाविष्णोःस्वास्थ्यंप्राप्नोतिमेदिनी॥ तथामनःस्वस्थितंमेकुरुत्वंभूतधारिणि॥ ततःचंद्रायार्घ्यंदद्यात्॥ क्षीरोदार्णवेति॰॥ उपोषितेनंनक्तंवाहविष्याशी॥ प्रातःपारणंद्विजदंपतीसदन्नेनसंतर्प्यवायनंदक्षिणांचदद्यात्॥ एवंप्रकारेणफाल्गुनादिमासचतुष्टयंकारयेत्॥ पुनःआषाढमासचतुष्टयंपूर्ववत्स्नानपूजांप्राशनंकुर्यात्॥ रात्रौजागरणादिकंचपुनस्तथैव॥ कार्तिकादिमासचतुष्टयं॥ प्रथमं धरणीं॰ द्वितीयंमेदिनीं ततः तृतीयं वसुंधरा॰ वत्सरांतेद्विज सवत्सांगांसर्वालंकारसुतांदद्यात्॥ व्रतेनानेनकल्याणींत्वयाहंपरितोषितः॥ तस्मात्प्रसादमतुलंकरोतितववसुव्रते॥ यथैवकुरुतेभक्त्याप्रजामेवसुधेनमः॥ सर्वबाधाविनिर्मुक्तोदशजन्मांतराण्यसौ॥ विशोकाःसर्वकल्याणंजनंस्यात्तुनसंशयः॥ ॥ इतिअशोकपूर्णिमाव्रतं॥ ॥अथद्वादशपूर्णिमाव्रतं॥ ॥विष्णुधर्मे ॥ नियमपूर्वकंस्नात्वातिथ्यादिसंकीर्त्यममेहजन्मनिजन्मांतरेवा

भर्त्रासहचतुर्विधपुरुषार्थधर्मार्थकाममोक्षप्राप्तिद्वाराश्री।विष्णुप्रीत्यर्थंद्वादशपूर्णिमाव्रतंकरिष्ये॥ कृतोपवासः मध्याह्नेअप
राण्हेविष्णुंविभवानुसारेणसंपूज्य॥चंद्रायार्घ्यंदत्वाद्वादशाक्षरमंत्रंजस्वाप्रार्थयेत्॥ श्री निशाबंधुरूपस्त्वंवासुदेवजगत्पते॥
मनोभिलषितंदेवपूरयस्वनमोनमः॥ततःब्राह्मणायउदकुंभंवस्त्रद्वयंउपानहछत्रदक्षिणासहितंदद्यात्॥रात्रौजागरणादिभिर्नि
नयेत्॥ प्रातःसदन्नेनब्राह्मणैःसहभुंजीत॥एवंप्रकारांतरेणप्रतिमासंकृत्वा॥ पृथक्पृथक्मासनामानि॥ केशव॰नारायण॰मा-
धव॰ गोविंद॰ विष्णो॰ मधुसूदन॰ त्रिविक्रम॰ वामन॰श्रीधर॰ हृषीकेश॰ पद्मनाभ॰दामोदर॰ एवंद्वादशक्रमेणपूजयेत्॥ संवत्स
रस्यांतेहिरण्मयंचंद्रंकृत्वापूजयेत्॥फलवस्त्रसहितंब्राह्मणायदत्वाव्रतपूर्तयेशुक्लांगांदक्षिणासहितांदद्यात्॥सदन्नेनविप्रद
पतीसहभुंजीत॥ ॥इतिद्वादशपूर्णिमाव्रतं॥ ॥ इतिश्री॰ व्रतोद्यापनकौमुद्यांपूर्णिमाव्रतानि॥ ॥अथामाव
स्याव्रतानि॥ ॥अथमार्गशीर्षामावास्यायांगौरीतपोव्रतं॥ ॥कालिकापुराणे॥ ॥तत्रविधिः इदंव्रतंषोडशवर्षात्म
कं॥अशक्तौषोडशमासात्मकं॥ तत्रप्रथमेब्देचतुर्दश्यांनक्तं॥अमायामुपोषणंपूजनंच॥ प्रतिपदिपारणा॥अत्रवर्षवृद्धौतिथिवृ

द्धिः॥ पूर्वोत्पन्त्का द्वितीयामाचरेत्॥ प्रदर्शनार्थं लिख्यते॥ द्वितीयेब्दे अमावास्यायांनक्तं॥ प्रतिपदि उपोषणं॥ द्वितीयायांपारणं
एवंसर्वत्रज्ञेयं॥ तिथ्यादिसंकीर्त्य आत्मनः पतिपुत्रसुखावाप्तिपूर्वकातुलसौभाग्यादिवृद्धिद्वारागौरीप्रीत्यर्थंगौरीतपोव्रतंकरि
ष्ये॥ इतिसंकल्प्य॥ सूर्यायार्घ्यंदत्वापूजासामग्रीमादायरात्रौशिवालयेगृहेवापीठेनमोदेव्याइतिमंत्रेणगौरीमावाह्य दक्षिणोत्त
रतः गणेशंस्कंदंचावाह्यपंचामृतपुरःसरंषोडशोपचारैः पूजयेत्॥ अंगपूजा॥ पार्वत्यैनमः पादौपू॰ हैमवत्यैन॰ जानुनी॰ गि
रिजायै॰ गुल्फं॰ गंभीरायै॰ नाभिं॰ अपर्णायै॰ उदरं॰ कामिन्यै॰ कंठं॰ स्कंदमात्रे॰ मुखं॰ लोकमोहिन्यै॰ ललाटं॰ गौर्यै॰ शिरः ततःता
म्रपात्रे॰ अष्टदलेतंतुमयींवर्त्तिंनिधायगोघृतेनदीपमुज्वालयेत्सूर्योदयावधि॥ एवंकथाश्रवणादिनारात्रिंनीत्वाब्राह्ममुहूर्त्ते
उत्थायस्नात्वागौरींसंपूज्यफलपूरिकातिलतंदुलसौभाग्याष्टकयुतधातुमयेपात्रेदीपंनिधायतिथिनामभिर्भ्रामयेत्॥ ततः सू
र्यायदर्शयेत्॥ यावत्पक्ष्यादीनांशब्दादिकंनास्तितावत्पूर्वमेवदीपभ्रमणादिकंकर्तव्यं॥ ततः प्रातर्दंपतीसंभोज्यगौरींविसृज्यस्वयम
क्षारंभुंजीत॥ वर्षवृद्धौदंपतीवृद्धिः॥ एवंषोडशवर्षंकृत्वांतेउद्यापनंकुर्यात्॥ मार्गशीर्षपौर्णमास्यांपूर्ववत्संकल्पंकृत्वाततोवृतान्चार्यः-

पीठेहेमीं गौरी गौरी भिमायेति मंत्रेण ईश्वरं च एषामीशे पशुपतिरिति मंत्रेण आवाह्य पूर्ववत्सर्वं कुर्यात् ॥ ग्रातरग्निं प्रतिष्ठाप्य अन्वादध्या
त् ॥ गौरीमीश्वरं च घृततिलद्रव्येण प्रत्येकमष्टोत्तरसहस्रसंख्याकाहुतिभिः ब्रह्मादिदेवताश्चैकैकयाज्याहुत्यायक्ष्ये ॥ ततः षोडशदंपतीः
वस्त्रादिनासंपूज्य शर्करारूपमोदकपूरितान्धातुमयान्मृन्मयान्वाकरकान्सदक्षिणांस्तेभ्योदद्यात् ॥ तत्र मंत्रः ॥ मोदकाद्यैश्च संपू-
र्णं व्रतसंपूर्तिकारकं ॥ करकं ते प्रयच्छामि गौरी मे प्रीयतामिति ॥ ततः पीठं व्रतपूर्तये गां च दत्वा ऽ शिषो गृहीत्वा भुंजीत ॥ ॥ इति
गौरीतपोव्रतं ॥ ॥ अथ पौषमाघामावास्यायां अर्धोदयव्रतं ॥ स्कांदे ॥ अर्धोदयस्वरूपं भारते ॥ ॥ अमार्कश्रवणपा
ते युक्ताचेत्पौषमाघयोः ॥ अर्धोदयः स विज्ञेयः कोटिसूर्यग्रहैः समइति ॥ दिवैवयोगः शस्तोयं न तु रात्रौ कदाचनेति ॥ तिथ्यादिसंकी
र्त्य आत्मनः अखिलपापक्षयपूर्वकधर्मार्थकाममोक्षचतुर्विधपुरुषार्थसिद्धिद्वारा ब्रह्मविष्णुशिवप्रीत्यर्थं अर्धोदयव्रतं करिष्य इ
ति संकल्प्य ॥ दर्भास्तृतशुद्धभूमौ शतत्रयद्रोणपरिमिततिलानां पर्वतं कृत्वा यथाशक्ति वा तत्र पलाधिकं सुवर्णस्य ब्रह्मविष्णुशि
वानां प्रतिमात्रयं कृत्वा ब्रह्मजज्ञानमिदं विष्णुस्त्र्यंबकमिति मंत्रैः प्रतिष्ठाप्य पूजयेत् ॥ परितो लोकेशांस्तत्तन्मंत्रैरावाहयेत् पूजये

च ॥ अथांगपूजाक्रमेण ॥ ब्रह्मणेनमः ॥ पादौपूजयामि ॥ हिरण्यगर्भाय॰ ऊरू॰ परमेष्ठिने॰ जंघे॰ वेधसेन॰ गुह्यं॰ हंसवाहनाय॰ कटिं॰ शता-
नंदाय॰ वक्षः॰ सावित्रीपतये॰ बाहू॰ पूर्वादिचतुर्मुखेषु ॥ ऋग्वेदाय॰ यजुर्वेदाय॰ सामवेदाय॰ अथर्ववेदाय॰ चतुर्वक्त्राय॰ नेत्रे॰ कपि-
लाये॰ ललाटं॰ हंसाय॰ शिरः॰ अथविष्णोः अनंताय॰ पादौ॰ विश्वरूपाय॰ ऊरू॰ मुकुंदाय॰ जानुनी॰ गोविंदाय॰ जंघे॰ प्रद्युम्नाय॰
गुह्यं॰ पद्मनाभाय॰ नाभिं॰ कौस्तुभवक्षसे॰ वक्षः॰ चतुर्भुजाय॰ बाहू॰ विश्वतोमुखाय॰ मुखं॰ सहस्रशिरसे॰ शिरः॰ ॥ अथ
शिवस्य ॥ ईशानाय॰ पादौ॰ चंद्रशेखराय॰ जंघे॰ पशुपतये॰ जानुनी॰ शंकराय॰ ऊरू॰ उमाकांताय॰ गुह्यं॰ नीललोहिताय॰ ना
भिं॰ कृत्तिवाससे॰ उदरं॰ नागोपवीतिनेन॰ बाहू॰ नीलकंठाय॰ कंठं॰ पंचवक्त्राय॰ मुखं॰ कपर्दिनेन॰ शिरः क्रमेणप्रार्थयेत् ॥ नमो
विश्वसृजेतुभ्यंसत्यायपरमात्मने ॥ देवायदेवपतयेयज्ञानांपतयेनमः ॥ नारायणजगन्नाथनमस्तेगरुडध्वज ॥ पीतांबरनम-
स्तुभ्यंजनार्दननमोऽस्तुते ॥ महेश्वरमहेशाननमस्तेत्रिपुरांतक ॥ जीमूतकेशायनमोनमस्तेवृषभध्वज ॥ ब्रह्मविष्णुमहेशानाः
कर्मणांफलहेतवः ॥ भक्त्यामयाकृतांपूजांगृण्हीध्वंजगदीश्वराः ॥ ततःसपत्नीकंवेदशास्त्रविदंब्राह्मणंदृत्वावस्त्रालंकरणादिभिः-

संपूज्य ॥ पुनर्ब्रह्मविष्णुमहेशान्पंचामृतपुरःसरंकमलतुलसीबिल्वदलैः संपूजयेत् ॥ ततोवृताचार्यः अग्निंप्रतिष्ठाप्यअन्वाद-
ध्यात् ॥ ब्रह्मविष्णुमहेशान्घृताक्ततिलद्रव्येणप्रतिदैवतंसहस्रसंख्याकाहुतिभिः ॥ लोकपालनेकैकयाज्याहुत्यायक्ष्ये ॥ ततस्ति
लपर्वतंप्रतिमात्रययुतंब्राह्मणायदद्यात्तत्रमंत्रः ॥ तिलपर्वतमध्यस्थाब्रह्मविष्णुमहेश्वराः ॥ दहंतुपातकंसर्वंयच्छंतुममसद्गति
मितिउक्त्वादद्यात् ॥ ततःसांगतासिद्ध्यर्थंरक्तकृष्णश्वेतवर्णसुरभित्रयंसोपस्करंदद्यात् ॥ भविष्येप्रकारांतरेणहोमद्रव्याण्युक्ता
नि ॥ पलाशसमिच्चरुतिलाज्यानि ॥ ब्रह्मणःअश्वत्थसमित्तिलपायसानिविष्णोः चर्वाज्यव्रीहयः शंभोः ॥ घृतेनपायसेनवापूरितं
कांस्यपात्रंसदक्षिणंदद्यात् ॥ ततोभूयसींदत्वाआशिषोगृहीत्वाब्राह्मणैः सहभुंजीत ॥ ॥ इतिअर्धोदयव्रतं ॥ ॥ अथसोमवत्य-
मावास्याव्रतं ॥ भविष्ये ॥ तत्रशंखः ॥ अमावास्यातुसोमेनसप्तमीभानुनासह ॥ चतुर्थीभूमिपुत्रेणसोमपुत्रेणचाष्टमी ॥ चतस्र
स्तिथयस्त्वेताः सूर्यग्रहणसन्निभाइति ॥ तिथ्यादिसंकीर्त्यआत्मनःअवैधव्यपुत्रपौत्रप्राप्तिपूर्वकअतुलसौभाग्यसिद्धिद्वाराश्व-
त्थरूपीनारायणप्रीत्यर्थंआचरितस्यसोमवत्यमावास्याव्रतस्यसांगतासिद्ध्यर्थंतदुद्यापनाख्यंकर्मकरिष्ये ॥ इतिसंकल्प्य ॥ ततो

वृताचार्यः सर्वतोभद्रस्थकलशेरौप्यमयपीठस्थसौवर्णाश्वत्थाधोहैमंलक्ष्मीनारायणंइदंविष्णुरितिमंत्रेणप्रतिष्ठाप्यपूजयेत्॥ मूल
तोब्रह्मरूपायेतिपुरुषसूक्तेनवापूजयेत्॥ कथाश्रवणादिनारात्रिंनिनयेत्॥ प्रातरग्निंप्रतिष्ठाप्यअन्वादध्यात्॥ लक्ष्मीनारायणम
श्वत्थसमित्पायसतिलद्रव्येणप्रत्येकमष्टोत्तरशतसंख्याकाहुतिभिःब्रह्मादिदेवताश्चैकैकयाज्याहुत्यायक्ष्ये॥ ततोद्वादशब्राह्मणान्
वस्त्रादिनासंपूज्यलड्डुकपायसघृतमंडकादिपक्वान्नैःसंतर्प्यआशिषोगृहीत्वास्वयंभुंजीत्॥ ॥इतिसोमवत्यमावास्याव्रतम्
अथमलमासव्रतं पाद्मे॥ मलमासस्यकृष्णपक्षेचतुर्दश्यांत्रयोदश्यांवाअष्टम्यांनवम्यांतृतीयायांवान्यतमतिथौकार्यं॥ ति-
थ्यादिसंकीर्त्यआत्मनोदारिद्र्यपापदुःखनाशसत्पुत्रप्राप्तिपूर्वकअतुलभोगसिद्धिद्वारासवितृरूपीपरमेश्वरप्रीत्यर्थंमलमासव्रतंक
रिष्येइतिसंकल्प्य॥ मध्याह्नेसर्वतोभद्रस्थकलशेहैमंलक्ष्मीयुतंजनार्दनंसंपूज्यनानाविधपक्वान्ननैवेद्यंदत्वाफलपुष्पोपेतमर्घ्यंदद्या
त्॥ तत्रमंत्रः॥ देवदेवजगन्नाथप्रलयोत्पत्तिकारक॥ गृहाणार्घ्यंमयादत्तंकृपांकुरुममोपरि॥ ततःसपत्नीकंब्राह्मणंवस्त्रादिनासं
पूज्यत्रयस्त्रिंशदपूपान्कांस्यपात्रेनिधायसघृतंसहिरण्यंवायनंब्राह्मणायनिवेदयेत्॥ तत्रमंत्रः॥ विप्रायवेदविदुषेश्रोत्रियाय

७२

कुटुंबिने ॥ नरकोत्तारणार्थाय अच्युतः प्रीयतामिति ॥ इति दत्वा छत्रोपानद्भूषणाच्छादनादियुतां शय्यां च दत्वा पीठं व्रतपूर्तये गां च
दत्वा नानाविधपक्वान्नैर्ब्राह्मणान्संतर्प्य आशिषो गृहीत्वा स्वयं भुंजीत ॥ ॥ इति मलमासव्रतम् ॥ ॥ अथ श्रावणामायां
पिठोराव्रतं ॥ स्कांदे ॥ प्रातः स्नानादि निर्वर्त्य वार्षिकवस्तूजामुद्यापनसंकल्पं कुर्यात् ॥ तिथ्यादि संकीर्त्य आत्मनः स्वकुलस्य च सं
ततिविच्छेदाभावपूर्वकपुत्रपौत्रलक्ष्मीस्फुरत्वाद्यभिवृद्धये सप्तवर्षावध्याचरितपिठोराव्रतस्य संपूर्णतासिद्ध्यर्थं चतुःषष्टियोगि
नीस्वरूपासप्तमातृकाप्रीत्यर्थं तदुद्यापनाख्यं कर्म करिष्ये ॥ कृताचार्यः उक्तप्रकारेण सर्वतोभद्रे अष्टौ कलशान्प्रतिष्ठाप्य सप्त-
कलशेषु क्रमेण हैमीः सप्तप्रतिमा नाममंत्रेण ॥ ब्राह्मीं० माहेश्वरीं० कौमारीं० वैष्णवीं० वाराहीं० इंद्राणीं० चामुंडां० आवाह्य जज्ञा
नं सप्त मातरो इत्यनेन पूजयेत् ॥ तदुत्तरे स्वर्णादिपूर्णपात्रयुते कलशे चतुःषष्टियोगिनीः हैमप्रतिमासु अक्षतपुंजेषु वा आवाहयेत्
दिव्ययोगिनीं० १ महायोगिनीं० २ सिद्धयोगिनीं ३ गणेश्वरीं० ४ प्रेताक्षीं० ५ डाकिनीं० ६ काली० ७ कालरात्रीं० ८ निशाचरीं० ९ ॐ का
रीं० १० रुद्रवेतालीं० ११ हींकारीं० १२ भूतडांबरीं० १३ ऊर्ध्वकेशीं० १४ विरूपाक्षीं० १५ शुष्कांगीं० १६ नरभोजनां० १७ भरांडीं० १८ वीरभद्रां

धूम्राक्षी· २० कलहप्रियां· २१ राक्षसीं· २२ घोररक्ताक्षीं· २३ विरूपां· २४ भयंकरीं· २५ भास्करीं २६ रौद्रवेतालीं· २७ श्रीपर्णी· २८
त्रिपुरांतकां· २९ भैरवीं· ३० ध्वंसिनीं· ३१ क्रोधिनीं· ३२ दुर्मुखीं· ३३ प्रेतवाहिनीं· ३४ कंटकीं· ३५ चाटकीं· ३६ यमदूतीं· ३७ करालीं·
३८ खट्वांगीं· ३९ दीर्घलंबोष्ठीं· ४० मालिनीं· ४१ मंत्रयोगिनीं· ४२ कालाग्निगृहिणीं ४३ चक्रीं· ४४ कंकालीं ४५ भुवनेश्वरीं· ४६
स्फाराक्षीं· ४७ कार्मुकीं· ४८ लौकिकीं· ४९ काकदृष्टिं· ५० अधोमुखीं· ५१ भक्षणीं ५२ प्रेरणीं· ५३ व्याघ्रीं ५४ कंकणीं· ५५ प्रेतभक्ष
णीं· ५६ वीरकौमारिकां ५७ चंडां· ५८ वराहीं· ५९ मुंडधारिणीं· ६० कामाक्षीं ६१ उड्डाणीं· ६२ जालंधरां· ६३ महालक्ष्मीं ६४ ततः
सुवर्णपात्रेण फलपुष्पयुतमर्घ्यं नाममंत्रेण प्रत्येकं दद्यात्॥ रात्रिं निनयेत्॥ प्रातः पीठदेवताः संपूज्य अग्निं प्रतिष्ठाप्य अन्वादध्यात्
सप्तमातृः अष्टोत्तरशतमाज्याहुत्या योगिनीश्चैकैकयाज्याहुत्या ब्रह्मादिदेवताश्चैकैकयाज्याहुत्या यक्ष्ये॥ पूजामंत्रेण होमः होमस्य
कृताकृतः ततः सप्तमिथुनानि वस्त्रादिना संपूज्य वस्त्रदक्षिणाप्रतिमायुतान्सप्तकलशान्तेभ्यो दद्यात्॥ तत्र मंत्रः॥ सोपस्करं च क
लशं गृहाण द्विजसत्तम॥ प्रीयंतां मातरो मह्यं लोकानां स्थितिहेतवे॥ ततो योगिनीपीठमाचार्याय दत्वा व्रतपूर्तये अष्टौ गास्तेभ्यो द

त्वासदन्नेनसंतर्प्य आशिषोगृहीत्वास्वयंभुंजीत ॥ इतिपिठोराव्रतम् ॥ ॥ इतिश्रीमच्चित्त॰ व्रतोद्यापनकौमुद्यांतिथिव्रतानिस
माप्तानि ॥ ॥ अथचातुर्मास्यव्रतारंभः ॥ ॥ तत्रस्वस्तिकव्रतम् ॥ भविष्ये ॥ तत्तुआषाढादिआश्विनांतं तत्रविधिः ॥ देवा
लयेगोष्ठेतुलस्यालयेगृहेवागोमयोपलिप्तशुद्धभूमौपंचरंगैर्वर्णैःप्रत्यहंसहस्रंस्वस्तिकानिलिखित्वातत्रगोपालंसंपूजयेत् ॥
एवंचरित्वांतेउद्यापनंकुर्यात् ॥ तद्यथा ॥ तिथ्यादिसंकीर्त्यआत्मनःशत्रुजयपापक्षयवैधव्यादिनिरसनपूर्वकपुत्रपौत्रसौभाग्या-
रोग्यसंप्राप्तिद्वाराआचरितस्यस्वस्तिकव्रतस्यपूर्णतासिद्धयेगोपालप्रीत्यर्थंतदुद्यापनंकरिष्ये ॥ ततोवृताचार्यःसर्वतोभद्रस्थक
लशेहैमंगोपालंइदंविष्णुरिति मंत्रेणसंस्थाप्यपूजयेत् ॥ प्रातरग्निंप्रतिष्ठाप्यअन्वादध्यात् ॥ गोपालंस्वस्तिकदशांशेनशतांशेन
वाघृताक्तपायसद्रव्येणब्रह्मादिदेवताश्चैवैकैकयाज्याहुत्यायक्ष्ये ॥ होममंत्रः ॥ स्वस्त्ययनंतार्क्ष्यमरिष्टनेमिमिति ॥ पौराणमंत्रस्तु ॥
स्वस्तिनापरमंदेवंस्वस्तिकरणकारणात् ॥ स्वस्तयेपापसंयच्छसंयुक्तंममाग्नयेस्वाहेति ॥ होमदशांशेनतर्पणंहोममंत्रेण ॥ तद्दशां
शेनब्राह्मणभोजनं ॥ ततोविशिष्टान्दशब्राह्मणान्वस्त्रादिनासंपूज्यतेभ्यःपंचरंगयुतान्यौर्णान्यभावेदर्भजान्यप्यासनानिद-

क्षिणापुरःसरंदत्वासोपस्करमाचार्यायदत्वाव्रतपूर्तयेगोमिथुनंचदत्वा अधिक फलावाप्तयेयवानांद्रोणंतदभावे आढकीनांद्रोणं
दत्वापक्वान्नैर्ब्राह्मणान्सदन्नेनसंतर्प्यआशिषोगृहीत्वास्वयंभुंजीत॥ ॥इतिस्वस्तिकव्रतं॥ ॥अथश्रावणांत्यभृगुवासरे
वरदलक्ष्मीव्रतं॥ भविष्ये॥ तिथ्यादिसंकीर्त्यआत्मनः अतुलसौभाग्यपुत्रपौत्रादिप्राप्तिपूर्वकअधिकलक्ष्मीप्राप्तयेवरदल
क्ष्मीव्रतंकरिष्ये॥ शुद्धभूमौचतुर्द्वारोपशोभितमंडपेपंचरंगशोभितवेदिकायांप्रस्थतंडुलस्थकलशोपरिहैमीलक्ष्मीप्रतिमांस
कुंभिवनितेतिमंत्रेणआवाह्यश्रीसूक्तेनपूजयेत॥ ततस्तुरतएकविंशतितंतुमितंहरिद्रारंजितंदोरकंपूजयेत् अथांगपूजा॥ वर
दलक्ष्म्यैनमः॰ पादौपूजयामि॥ कमलवासिन्यै॰ गुल्फौ॰ पद्मालयायै॰ जंघे॰ श्रियै॰ जानुनी॰ इंद्राण्यै॰ ऊरू॰ हरिप्रियायै॰ कटिं॰ लोक
धात्र्यै॰ नाभिं॰ शंखनिध्यै॰ हस्तौ॰ त्रैलोक्यपावन्यै॰ कंठं॰ मायायै॰ मुखं॰ धात्र्यै॰ बाहू॰ पद्मनिध्यै॰ नयने॰ भार्गव्यै॰ कर्णौ॰ क्षीरसाग
रजायै॰ ललाटं॰ वरदलक्ष्म्यै॰ शिरःपू॰ महालक्ष्म्यै॰ सर्वांगं॰ ततोश्वत्थबिल्वचूतदाडिममालतीनांप्रत्येकंएकविंशतिपत्रैर्वरदल–
क्ष्म्यैनमइत्यनेनपूजयेत् ॥एकविंशत्यपूपपायसनैवेद्यंपुनरर्घ्यं॥ क्षीरार्णवसुतेलक्ष्मीचंद्रस्यैवसहोदरि ॥गृहाणार्घ्यंमहाल

क्ष्मिदेवितुभ्यंनमोनमः॥ ततोदोरकग्रहणं॥ सर्वमंगलमांगल्येसर्वपापप्रणाशिनि॥ दोरकंप्रतिगृण्हामिसुप्रीताभवमेशुभे॥
ततः कंठेदोरकबंधनं॥ करिष्यामिव्रतंदेवित्वद्भक्तस्त्वत्परायणः॥ श्रियंदेहियशोदेहिसौभाग्यंदेहिमेशिवे॥ ततःप्रार्थयेत्
प्रयच्छपुत्रपौत्रांश्चविष्णुवक्षःस्थलेनघे॥ श्रियंदेहियशोदेहिसर्वान्कामांश्चदेहिमे॥ ततोवायनपंचकंदद्यात्क्रमेण॥ विप्रा
यपत्नयेदेव्यैब्रह्मचारिणेसुवासिन्यैच॥ तत्रमंत्रः॥ एकविंशतिपक्वान्नशर्कराघृतसंयुतं॥ वायनंतेप्रयच्छामिइंदिराप्रीयतामि
ति॥ ततःक्षमाप्य॥ ब्राह्मणसुवासिनीःसदन्नेनसंतर्प्यशक्तौसत्यांगांचदत्वामौनेनभुंजीत॥ ॥इतिवरदलक्ष्मीव्रतम्॥
अत्रव्रतेनानेनदेवीतुष्टानवातत्रपरीक्षा॥ नागवल्लीदलंत्वेकंक्रमुकंचूर्णवर्जितं॥ भक्षयित्वातुचैलांतेबध्वाप्रातर्निरीक्षयेत्॥
आरक्तेसतितुष्टादेवीज्ञेयाविचक्षणैः॥ अन्यथानष्टंतंकुर्यात्सर्वथाभूतिमिच्छती॥ ॥अथाश्विनशुक्लपक्षांत्यभानुवास
रमारभ्यमाघशुक्लसप्तम्यवधिदानफलव्रतं॥ स्कांदे॥ तिथ्यादिसंकीर्त्यआत्मनःसत्पुत्रप्राप्तिपूर्वकसुखारोग्यतासिद्धिद्वारा
सवितृप्रीत्यर्थंदानफलव्रतंकरिष्ये॥ तदंगसवितृपूजनंकरिष्येइतिसंकल्प्य॥ गोमयोपलिप्तशुद्धभूमौताम्रपीठेसवितारमावाह्य

पूजयेत्॥ तत्रध्यानं॥ ध्येयः सदासवितृमंडलमध्यवर्तीनारायणः सरसिजासनसंन्निविष्ट ॥ केयूरवान्मकरकुंडलवान्किरीटीहा
रीहिरण्मयवपुर्धृतशंखचक्रः॥ जगन्नाथायनमः आवाहनं॥ पद्मासना· आसनं· ग्रहपतये· पाद्यं· तमोहर्त्रे· अर्घ्यं· मित्राय· आ
चमनीयं· विश्वतेजसे· स्नानं· जगत्पतये· वस्त्रं· त्रिमूर्तये· उपवीतं· हरये· गंधं· सूर्याय· अक्षतान्· भास्कराय· पुष्पं· अहःपत
ये· धूपं· अज्ञाननाशिने· दीपं· लोकेशाय· नैवेद्यं· विश्वतेजसे· तांबूलं· सूर्याय· दक्षिणां· विश्वतेजसे· नीराजनं· भास्कराय· मंत्र
पुष्पं· पूष्णे· प्रदक्षिणां· सर्वात्मने· नमस्कारं· ततोद्वादशार्घ्याणिताम्रादिपात्रे जलाक्षतपुष्पादिप्रक्षिप्यदद्यात्॥ दिवाकरनमस्तु
भ्यंपापंनाशयभास्कर॥ त्रयीमयार्कविश्वात्मन् गृहाणार्घ्यंनमोस्तुते॥ ततोब्राह्मणंसंपूज्य देवंविसर्जयेत्॥ स्वयंतैलाम्ललवणब
हुबीजफलादिवर्ज्यंभोजनंकुर्यात्॥ कंदमूलफलाहारेणविशेषफलं॥ एवंप्रतिमासानुवासरंमाघशुद्धसप्तम्यवधिकर्तव्यं॥ ततउ
द्यापनं॥ तत्रषष्ठ्यामुपोष्यप्रातःस्नात्वापूर्वसंकल्पमुक्त्वासंपूर्णतासिद्ध्यर्थंतदुद्यापनंकरिष्येइतिसंकल्प्य॥ ततोहृताचार्योमध्याह्नेस
र्वतोभद्रस्थकलशेहैमंरौप्यंरथस्थंसूर्यं आकृष्णेनेतिमंत्रेणसंस्थाप्यपूर्ववत्पूजयेत्॥ ततोऽग्निंप्रतिष्ठाप्य अन्वादध्यात्॥ सवि

तारंघृताक्तपायसद्रव्येणसहस्रमष्टोत्तरशतंवातत्संख्याकाहुतिभिःब्रह्मादिदेवताभ्यैकैकयाज्याहुत्यायक्ष्ये॥ ततःपायसपूरि
तकांस्यपात्रपीठंव्रतपूर्तयेगांचआचार्यायदत्वापरमान्नेनद्वादशब्राह्मणान्संतर्पयेत्॥ एवंकुर्यात्संचवर्षेपंचधान्यंततोऽर्पयेत्
पंचप्रस्थप्रमाणंचसफलंदक्षिणान्वितं॥ क्रमेणपंचवर्षेषु व्रीहयः १ गोधूमाः २ लवणं ३ तिलाः ४ माषाः ५ एवंकृतेसकलमनोर
थावाप्तिर्भवति॥ इतिदानफलव्रतं॥ ॥ अथधारणापारणव्रतम्॥ भविष्ये॥ चातुर्मास्येकादशीमारभ्यमासचतुष्टयं-
मासंवाकार्यं॥ तिथ्यादिसंकीर्त्यआत्मनोबंधुवधादिजनितपापक्षयपूर्वकउत्तमलोकप्राप्त्यर्थंधारणपारणव्रतंकरिष्ये॥गणेशंसंपू
ज्यविष्णुपीठेअष्टाक्षरमंत्रेणषोडशोपचारैःसंपूज्यएकादश्यामुपवसेत्॥ ततःप्रातःस्नात्वादेवंसंपूज्यअष्टाक्षरमनुमष्टोत्तरशतंजप्त्वा
तेनैवाष्टोत्तरशतमर्घ्यंदत्वाब्राह्मणभोजनपुरःसरंमौनीस्वयंभुंजीत॥ एवंमासंचरित्वाएकादश्यामुद्यापनंकुर्यात्॥ उक्तप्रकारेणव्रता
चार्यः सर्वतोभद्रस्थकलशेहैमंलक्ष्मीनारायणंविष्णोर्कमितिमंत्रेणसंस्थाप्यपंचामृतपुरःसरंसंपूज्यरात्रिंजागरणादिनानिनये-
त्॥ प्रातरग्निंप्रतिष्ठाप्यअन्वादध्यात्॥ प्रधानंविष्णुंनिषुसीदेतिमंत्रेणतिलौदनेन अराधिकाणेइतिमंत्रेणघृतौदनेनअष्टाक्षरमं

त्रेणपायसेनचाष्टोत्तरशतसंख्याकाहुतिभिर्ब्रह्मादिदेवताभ्यएकैकयाज्याहुत्यायक्ष्ये॥ततःप्रतिमासंपंचदशब्राह्मणान्सदन्नेनसंत-
र्प्यपीठंव्रतपूर्तयेगांचआचार्यायदत्वास्वयंभुंजीत॥ ॥इतिधारणापारणव्रतम्॥ ॥अथआश्विनशुक्लैकादशीमारभ्यमासपर्यंतं
मासोपवासव्रतं॥ विष्णुरहस्ये॥ ॥तिथ्यादिसंकीर्त्यआत्मनोशेषपापक्षयपूर्वकचतुर्विधपुरुषार्थसिद्धयेमहाविष्णुप्रीत्यर्थं
मासोपवासव्रतंकरिष्ये॥प्रत्यहंत्रिकालस्नानंविष्णुमंत्रजपोविष्णुपूजनंतुलसीदलानामर्पणंअसदालापवर्जनंपुराणपठनंश्रवणं
चब्राह्मणपूजनंयथाशक्तिदानंचएवमादिनियमान्कुर्यात्॥ अंतेएकादश्यामुद्यापनंकुर्यात्॥ उक्तप्रकारेणवृताचार्यःसर्वतोभद्रस्थ
कलशेहैमंलक्ष्मीनारायणंसहस्रशीर्षेतिऋचाद्वादशाक्षरमनुनावासंस्थाप्यपुरुषसूक्तेनपूजयेत्॥कथाश्रवणादिनारात्रिंनीत्वाप्रा
तरग्निंप्रतिष्ठाप्यअन्वादध्यात्॥लक्ष्मीनारायणंपायसद्रव्येणसहस्रसंख्याकाहुतिभिर्ब्रह्मादिदेवताभ्यएकैकयाज्याहुत्यायक्ष्ये॥त
तःपीठंगांचआचार्यायदत्वावेदशास्त्रसंपन्नांस्त्रिंशद्ब्राह्मणान्वस्त्रपात्रभूषणादिभिःसंपूज्यत्रिंशद्घटांस्तन्मौल्यंवादक्षिणात्वेन
दत्वासोपस्करांशय्यांगुणवतेज्ञानवतेद्विजायदत्वासदन्नेनब्राह्मणान्संतर्प्यआशिषोगृहीत्वाविष्णुलोकगमनार्थंद्विजान्प्रार्थयेत्

भो द्विजा अनुमोदध्वं विष्णुलोकं प्रयाम्यहं ॥ नतो द्विजाः प्रतिवदेयुः ॥ भजव्रजनरश्रेष्ठ विष्णुलोकमनामयं ॥ विमानवैष्णवंदिव्यंशय्या
यांपरिकल्पितं ॥ तेनविष्णुपदंयाहि सच्चिदानंदरूपिणं ॥ ततो दीनानाथान्प्रतोष्य स्वयंमौनीभुंजीत ॥ अशक्तेनतु कंदमूलफल
पयोभक्षणादिनाकर्तव्यं ॥ सर्वपापमुक्तोभवति ॥ ॥इतिमासव्रतं ॥ ॥ अथचातुर्मास्येअवश्यंत्याज्यानिलिख्यंते ॥
श्रावणेवर्जयेच्छाकंदधिभाद्रपदेतथा ॥ दुग्धमाश्वयुजेमासि कार्तिकेद्विदलंत्यजेदिति ॥ स्कांदे ॥ भविष्ये ॥ शाकव्रतं
नित्यं ॥ ॥ द्विदलंबहुबीजंवृंताकंजंबीरं राजमाषंरक्तमूलकंकूष्मांडइक्षुदंडंबदरीनूतनफलं तिंतिणीधात्रीमंचकरखुद्धा
दिशयनं ॥ अनृतोभार्या ॥ अन्यदिनेमासं ॥ मधु ॥ पलोदनं ॥ अभक्ष्यं ॥ सितसर्षपं ॥ आशुधान्यं ॥ अंबीजफलं ॥ विकारि ॥ सदैवं
दशविधशाकं ॥ मूलं ॥ पत्रं ॥ करीराग्रंफलं ॥ कांडादिरूढका ॥ त्वक्पुष्पंकवचंचेति शाकंदशविधंस्मृतं ॥ दग्धान्नंपर्युषितान्नं
उष्ट्रादिदुग्धं ॥ द्विजक्रीतरसाः ॥ ताम्रपात्रस्थंगव्यंच ॥ पल्वजलं ॥ आत्मार्थंपाचितं ॥ गृंजनं ॥ लसुणं ॥ पलांडुं ॥ पटोलंमसूरं ॥
कुलित्थं ॥ कलिंगं ॥ बिल्वमुदुंबर भिःसदाप्राण्यंगंचूर्णंभूमिजलवणंनिष्पावान्संधितानि ॥ अन्यान्यपितिथिषुरनिषिद्धानि

त्याज्यानि॥ त्यक्तं यन्मासपर्यंतं तदंते ब्राह्मणाय दत्वा व्रतपूर्त्यै गां च दत्वा स्वयं भुंजीत ॥ अन्यान्यपि व्रतानि तदुद्यापनानि च
लिख्यंते॥ भविष्ये॥ कार्तिक्यां सर्वेषामुद्यापनानि॥ नक्तव्रते गौर्देया॥ एकांतरोपवासे गौः ॥ भूशयने शय्या॥ ष
ष्ठकालभोजने गौः व्रीहिगोधूमादिधान्यत्यागे हैंव्यव्रीह्यादि॥ शाकान्ने गौः पयोमधुदधिघृतव्रतेषु वासोयुगं गौश्च ब्रह्मचर्ये हेम
विष्णुमूर्तिः॥ तांबूले वासोयुगुलं॥ मौने घृतकुंभं वस्त्रयुगं घंटां च॥ देवाग्रे रंगमालिकाकरणे धेनुर्हेमपद्मं च॥ देवालये दीपकरणे
दीपिकावासोयुगं च॥ भूमिभोजने पर्णभोजने च कांस्यपात्रं गौश्च॥ चतुष्पथदीपे गौः गोग्रासे वृषभः॥ देवादीनां शतप्रदक्षिणाकरणे
वस्त्रं॥ एवमेवान्यवस्तुत्यागे गौर्देया॥ ॥अथ वारव्रतानि सौरधर्मे॥ ॥तत्र मार्गशीर्षाद्यरविवारे सूर्यव्रतं॥ ॥तिथ्यादि
संकीर्त्य आत्मनो रोगक्षयपुत्रलाभादिप्राप्तिपूर्वकाभीष्टकामनासिद्ध्यर्थं वर्षात्मकं सूर्यव्रतं करिष्ये इति संकल्प्य॥ गोमयोपलिप्तभू
मौ पंचरंगैर्द्वादशार पद्मं विलिख्य तत्र ताम्रपात्रं निधाय तन्मध्ये रक्तचंदनादिना पद्मं विरच्य तत्र वक्ष्यमाणरीत्या सूर्यं संपूजये
त्॥ मार्गशीर्षादिद्वादशमासेषु क्रमेण देवनामार्घ्यनैवेद्यं स्वभक्षणं दानं च ज्ञेयं॥ तत्र मार्गशीर्षे मित्रं॰ नारिकेरार्घ्यं साज्यगुडतं

दुलनैवेद्यं॥ तुलसीपत्रत्रयभक्षणं॥ साज्यगुडभक्तदानं॥ १ पौषे विष्णुं॰ बीजपूरं कृसरान्नं॥ पलत्रयंघृतं॰ घृतंन्च॰ २ माघेव
रुणं पूगीफलं तिलगुडं॰ मुष्टित्रयंतिलाः सगुडकुडवतिलाः ३ फाल्गुने सूर्यं जंबीरं सघृतंदधि॰ दधितंडुलाः ४ चैत्रे भानुं दा
डिमं घृतपूरिका पलत्रयंदुग्धं मिष्टान्नं ५ वैशाखे तपनं द्राक्षा सघृतंमाषान्नं अंगुष्ठार्धगोमयं माषा ६ ज्येष्ठेइंद्रं सहका
रं करंभं॰ अंजलित्रयं॰ ७ आषाढे रविंजातीफलं पृथुकाः मरीचत्र॰ पृथुकाः॥ ८ श्रावणे गभस्तिमंतं त्रपुषीफलं यवसक्तु
मुष्टित्रयंयवसक्तु॰ यथेष्टंभोजनं ९ भाद्रपदे यमंकूष्मांडं तंदुलाज्यं पलद्वयंगोमूत्रं भोजनं १० आश्विने हिरण्यरेतसं॰ दाडि
मं शर्करा॰ शर्करापलत्रयं शर्कराभक्तं ११ कार्तिके॰ दिवाकरं रंभाफलं पायसं पायसं पायसं १२ एवंवर्षपर्यंतंन्चरित्वांतेमार्ग
शीर्षादिरविवासरेउद्यापनंकुर्यात् ॥ उक्तप्रकारेणवृताचार्योमध्यान्हेसर्वतोभद्रेकलशंप्रतिष्ठाप्यतदुपरिस्क्ताक्षतयुतंताम्र
मयंपूर्णपात्रेनिधायतत्रद्वादशारंकमलंविरच्यतन्मध्येरौप्यमयंरथंप्रतिष्ठाप्यतदुपरिहैमंसंज्ञासहितंसहस्त्रकिरणंआकृष्णे
नेतिमंत्रेणप्रतिष्ठाप्यपरितोद्वादशदलेषुद्वादशमासाधिपान्क्रमेणपूजयेत् मित्रं १ विष्णुं २ वरुणं ३ सूर्यं ४ भानुं ५ तपनं ६

इंद्रं ७ रविं ८ गभस्तिं ९ यमं १० हिरण्यरेतसं ११ दिवाकरं १२ ततोरक्ताक्षतपुष्पवस्त्रादिभिः संपूज्यपरमान्नेननैवेद्यंदत्वावि
शेषार्घ्यंनालिकेरयुतंदद्यात् ॥ तत्रमंत्रः नमःसहस्रकिरणसर्वव्याधिविनाशन॥ गृहाणार्घ्यंमयादत्तंसंज्ञयासहितोरवेः॥ एवंपू
जांसमाप्यततःसूर्यदैवतंश्राद्धंकृत्वाततआचार्योग्निंप्रतिष्ठाप्यअन्वादध्यात्॥ संज्ञासहितंसहस्रकिरणंपायसद्रव्येणाष्टोत्तर
शतसंख्याकाहुतिभिः द्वादशपरिवारदेवताःब्रह्मादिदेवताश्चैकैकयाज्याहुत्यायक्ष्ये॥ ततोद्वादशब्राह्मणान्संतर्पयेत्॥ ॥
॥ इतिसूर्यव्रतं॥ ॥ अथाशादित्यव्रतं॥ भविष्ये॥ आश्विनाद्यरविवारमारभ्यप्रतिरविवारंवर्षपर्यंतंकुर्यात्॥
तिथ्यादिसंकीर्त्यआत्मनःसकलरोगनिरसनपूर्वकपुत्रपौत्रसकलाभीष्टसिद्धिद्वारासवितृप्रीत्यर्थंआशादित्यव्रतंकरिष्ये॥
इतिसंकल्प्य॥ गोमयोपलिप्तभूमौरक्तचंदनादिनावर्तुलमंडलंविरच्यतत्रमासाधिपंदेवमावाह्यषोडशोपचारैःसंपूज्य॥ रक्तपुष्पा
क्षतादियुतंसजलंताम्रपात्रेणार्घ्यंभूमौजानुनीनिपात्यदद्यात्॥ तत्रमंत्रः॥ यथाशाविमलाःसर्वास्तवभास्करभानुभिः॥ तथा
शाविमलामह्यंकुरुनित्यंममार्घ्यतः॥ ततोनमस्कारः॥ नमोस्तुतेपापविनाशनायविश्वात्मनेसप्ततुरंगमाय॥ सामर्ग्यजुर्धा

मनिधेविधात्रेभवाब्धिपोतायनमःसवित्रे॥ अनेनमंत्रेणमासाधिपनाममंत्रेणच्चपूजाकार्या॥ मासाधिपनामानि॥ सूर्यः १
धाता २ वरुणः ३ माधवः ४ हरिः ५ रविः ६ रुद्रः ७ भर्गः ८ स्वर्णरेताः ९ अर्यमा १० भानुः ११ भास्करः १२ एवंप्रतिभानुवारं
वर्षपर्यंतंच्चरित्वांतेआश्विनाद्यरविवारेउद्यापनंकुर्यात्॥ ततः इताचार्यः सर्वतोभद्रेरक्तवस्त्रवेष्टितंताम्रकलशंप्रतिष्ठाप्यता
म्रमयंपूर्णपात्रंनिधायतत्ररक्ताक्षतैर्द्वादशारंकमलंविरच्यतन्मध्येरौप्यरथेहैमंसवितारंआकृष्णेनेतिमंत्रेणसंस्थाप्यपरितो
द्वादशदलेषुपूर्वोक्तद्वादशमासाधिपान्प्रतिष्ठाप्यउक्तप्रकारेणपूजयेत्॥ ततोऽग्निंप्रतिष्ठाप्यहोमयेत्॥ प्रधानंसवितारंपा
यसद्रव्येणाष्टोत्तरशतसंख्याकाहुतिभिः मासाधिपद्वादशदेवताब्रह्मादिदेवताश्चैकैकयाज्याहुत्यायक्ष्ये॥ ततः पूर्वोक्तद्वादश
नामभिः द्वादशब्राह्मणान्वस्त्रादिभिः संपूज्यतेभ्यः शालितंदुलसंभवैः पक्वान्नैस्तंदुलैर्वापूरितान्रक्तकलशान्रक्तवस्त्रवेष्टि
तान्सदक्षिणान्दत्वाऽऽचार्यायपीठंव्रतपूर्तयेगांचदत्वासदन्नेनब्राह्मणान्संतर्प्यआशिषोगृहीत्वास्वयंनक्तंभुंजीत॥ अत्रपायस
पूरितताम्रपात्रदानमुक्तंस्कांदे॥ होमकरणमपिकृताकृतं॥ एवंकृतेसर्वव्याध्यादिदुःखैर्मुक्तोभवति॥ ॥इतिरविवारव्र

तम्॥ ॥अथसोमवारव्रतं॥ स्कांदे॥ तत्रग्रहणविधिः ॥ श्रावणेचैत्रवैशाखेज्येष्ठेचमार्गशीर्षके॥ एतेषामन्यतमेमासि
शुक्लपक्षेइंदुवारयुताष्टम्यांग्राह्यं॥अथवाप्रथमसोमवासरेच॥यावज्जीवंकर्तव्यं॥अथवाऽष्टवर्षपर्यंतंकर्तव्यं॥ अंतेउद्यापनंकुर्या
त्॥ तद्यथा॥ तिथ्यादिसंकीर्त्यआत्मनः अशेषपापक्षयपूर्वकसत्पुत्रप्राप्तिधनधान्यैश्वर्याभिवृद्धिद्वाराऽमुककामनयावाऽ
चरितस्यसोमवारव्रतस्यसांगतासिद्ध्येतदुद्यापनंकरिष्ये॥ वृताचार्यःचतुर्द्वारोपशोभितमंडपांतःअष्टादशांगुलोत्सेधांवित
स्तिद्वयविस्तृतांसमचतुरस्रांमृदावेदिंविधायतत्रशुक्लतंदुलैःषोडशारंकमलंविरच्यअथवापंचरंगशोभितंलिंगतोभद्रंविर
च्यतत्रब्रह्मादिदेवताआवाह्यतदुपरिअक्षतपुंजेश्वेतवस्त्रयुगोपेतंकलशंप्रतिष्ठाप्यतदुपरिसाक्षतंपूर्णपात्रंनिधायतत्रहैमं
शिवंत्र्यंबकमितिमंत्रेणहैमींगौरींचगौरीर्मिमायेतिमंत्रेणपुरतोराजतंवृषभंऋषभंमाइतिमंत्रेणप्रतिष्ठाप्यपरितःपूर्वादिक्रमेणअ
नंतं१ सूक्ष्मं २ शिवं ३ उत्तमं ४ त्रिमूर्तिं ५ रुद्रं ६ श्रीकंठं ७ शिखंडिनं॰८ पुनराग्नेयादिविदिक्षु गणेशं १ मातृः २ दुर्गां ३ क्षेत्रपा
लं ४ पुनः पूर्वदिक्षु लोकेशांस्तत्तन्मंत्रैः प्रतिष्ठाप्यपंचाक्षर्यापूजयेत्॥पुष्पोत्तरमंगपूजा॥ शिवायनमः पादौपूजयामि॥शं

कराय॰ गुल्फौ॰ भवहारिणे॰ जानुनी पू॰ शूलपाणिने॰ कटिं॰ शंभवे॰ गुह्यं॰ महादेवा॰ नाभिं॰ विश्वकर्त्रे॰ उदरं॰ सर्वतोमुखा॰ पार्श्वौ
स्थाणवे॰ स्तनौ॰ नीलकंठाय॰ कंठं॰ देवाय॰ मुखं॰ त्रिनेत्राय॰ नेत्रे॰ शर्वाय॰ ललाटं॰ शशिभूषणा॰ शिरः॰ देवाधिदेवाय॰ सर्वा
गं॰ एवंसंपूज्य रा त्रिंजागरणादिनानीत्वा ॥ प्रातरग्निंप्रतिष्ठाप्य अन्वादध्यात् ॥ सोमंशिवंत्र्यंबकमितिमंत्रेण पलाशसमिद्भिः
आप्यायस्वेतिमंत्रेणपृषदाज्येनत्वंसोमासीतिमंत्रेणयवव्रीहिपायसतिलाज्यद्रव्यैः प्रत्येकंअष्टोत्तरशतसंख्याकाहुतिभिः गौ
रींचत्रिमध्वाक्तदूर्वाभिस्तावतीभिराहुतिभिः परिवारदेवताब्रह्मादिदेवताश्चैकैकयाज्याहुत्या यक्ष्ये ॥ केचनगौरीहोमंपृथङ्ग
छंति ॥ ततः षोडशत्रयोदशवाब्राह्मणान्वक्ष्यमाणनामभिः संपूज्य तावतः फलपक्वान्नैरभावेतंदुलैर्वापूरितान्यटान्दक्षिणायुता
न्दद्यात् ॥ षोडशनामानि ॥ सोमेश्वरः१ ईशानः २ शंकरः ३ गिरिजाधवः ४ महेशः ५ सर्वभूतेशः ६ स्मरारिः ७ त्रिपुरांतकः ८
शिवः ९ पशुपतिः १० शंभुः ११ त्र्यंबकः १२ चंद्रशेखरः १३ गंगाधरः १४ महादेवः १५ वामदेवः १६ त्रयोदशपक्षे भवः १ शर्वः २
रुद्रः ३ पशुपतिः ४ उग्रः ५ महान् ६ भीमः ७ ईशानः ८ सद्योजाताय॰ ९ वामदेवः १० अघोरः ११ तत्पुरुषः १२ ईशानः १३ ततः

ततः पीठंव्रतपूर्तयेधवलांगांच आचार्यायदत्वा आशिषोगृहीत्वास्वयंभुंजीत ॥ भविष्येतुप्रकारांतरेणसोमवारव्रतम् ॥ ॥
तत्रव्रतविधिः ॥ ॥ प्रातर्नद्यादौस्नात्वा ऽ अमुककामनयासोमवारव्रतंकरिष्यइतिसंकल्प्य ॥ प्रदोषेपीठेदेवंवक्ष्यमाणप्रकारेण
संपूजयेत् ॥ इदंसोमवारव्रतमष्टेंदुवारात्मकं नवमेसोमवारेउद्यापनंकुर्यात् ॥ तत्रप्रथमेसोमवारेबीजपूरकाष्ठेनदंतधावनं
चूतपल्लवचंदनादियुतेकुंभेसाक्षतपात्रेआधारशक्तिसहितं शिवंपंचाक्षर्याप्रतिष्ठाप्यश्वेतवस्त्रपुष्पैःप्रपूज्यविविधभक्ष्यभो-
ज्यनैवेद्यंबीजपूरफलंचदत्वास्वयंचंदनंप्राश्यसोमेशंध्यायन्दर्भशय्यायांस्वपेत् ॥ भौमवासरेब्राह्मणभोजनपुरःसरंपारणंकु
र्यात् ॥ एवंकृतेसर्वव्याधिविनाशनंभवति द्वितीयादौविशेषोलिख्यंते ॥ अन्यत्पूर्ववत्समानं ॥ द्वितीये करंजदंतकाष्ठं ॥ ज्येष्ठाश-
क्तियुतंसूक्ष्मंदेवं ॥ शतपत्रपुष्पं ॥ नारिंगफलं ॥ घृतपाचितशष्कपूरिकानैवेद्यं ॥ आत्मनोमधुभक्षणं ॥ एवंकृतेगोलक्षफलंप्राप्नोति
तृतीये ॥ वरदंतकाष्ठं ॥ रौद्राशक्तियुतंशिवोत्तमंदेवं ॥ जातीपुष्पं ॥ शष्कभक्ष्यनैवेद्यं ॥ दाडिमफलं ॥ गोमूत्रप्राशनं ॥ कन्याकोटिदा
नफलं ॥ चतुर्थे ॥ अपामार्गदंतकाष्ठं ॥ एकशक्तियुतंरुद्रंदेवं ॥ चंपकपुष्पं ॥ कदलीफलं ॥ क्षीरशर्करानैवेद्यं ॥ दधिप्राशनं ॥ अयु

नयज्ञफलं ॥ पंचमे अश्वत्थदंतकाष्ठं ॥ उमाशक्तियुतंरुद्रंदेवं पद्मपुष्पम् दधिभक्तनैवेद्यं ॥ कूष्मांडफलं ॥ घृतप्राशनं ॥ सप्तजन्मा
र्जितब्रह्महत्यानाशनरूपंफलम् षष्ठे जंबूदंतकाष्ठं त्रिमूर्त्तिशक्तियुतंबलदेवं ॥ करवीरपुष्पं ॥ फलपायसमंडकनैवेद्यम् खर्जूरीफ
लं कुशोदकप्राशनं ॥ षडब्दफलंप्राप्नोति ॥ सप्तमे ॥ प्लक्षजंदंतकाष्ठं ॥ बलप्रमथिनीशक्तियुतंश्रीकंठंदेवं ॥ बकुलपुष्पम् ॥ पाय
सनैवेद्यं ॥ नालिकेरफलं ॥ क्षीरभक्षणं ॥ सप्तसागरसहितभूमिदानफलं ॥ अष्टमे ॥ खादिरदंतकाष्ठं ॥ सर्वभूतदमनाशक्तियु
तंशिखंडिनंदेवं स्रुगंधपुष्पं ॥ नानाविधफलं ॥ नानाविधभक्ष्यभोज्यनैवेद्यं ॥ गोमयप्राशनं ॥ सर्वदानोद्भवंफलं ॥ सर्वरात्रौ जाग
रणंपुराणपठनादिअवश्यकं ॥ नवमे सोमवारेउद्यापनंकुर्यात् ॥ तद्यथा ॥ तिथ्यादिसंकीर्त्यममाभीष्टकामनासिद्ध्यर्थ्यंआचरि
तंयत्सोमवारव्रतंतत्संपूर्णफलावाप्तयेतदुद्यापनंकरिष्ये ॥ पूर्ववद्वृताचार्यः चतुर्द्वारोपशोभितमंडपांतः मृदाष्टांगुलोच्छ्रितांसम
चतुरस्त्रां अष्टादशांगुलप्रमाणांवेदींकृत्वा तत्रलिंगतोभद्रंविरच्यवेदीपरितोष्ट दिक्षुपंचवर्णैःपद्मानिविरच्यवेद्यांब्रह्मादिदेवता
आवाह्यतत्रकलशंपूर्ववत्संस्थाप्यतत्ररुक्मशय्यायांहैमंसर्वशक्तियुतंसोमेशं ॐ नमः शिवायेतिमंत्रेणप्रतिष्ठाप्यवेदीपरितः

स्थापनविधिनाअष्टौकलशान्प्रतिष्ठाप्यतेषुक्रमेणदेवान्आवाहयेत् ॥ अनंतं १ सूक्ष्मं २ शिवं ३ उत्तमं ४ त्रिमूर्तिं ५ रुद्रं ६ श्रीकं
ठं ७ शिखंडिनं ८ इतिप्रतिष्ठाप्यपूजयेत् ॥ देवायवस्त्रालंकारनानाविधपुष्पकर्पूरधूपदीपविविधनैवेद्यफलतांबूलदक्षिणाछत्र
चामरादर्शादिसमर्प्यस्वयंपंचगव्यंप्राश्यपुराणपठनादिनारात्रिंनिनयेत् प्रातर्देवंसंपूज्यअग्निंप्रतिष्ठाप्यान्वादध्यात् ॥ अत्रप्र
धानं ॥ सर्वशक्तियुतंसोमेशंपलाशसमित्घृतपायसतिलव्रीहियवमधुदूर्वाद्रव्यैः प्रतिद्रव्यमष्टोत्तरशतसंख्याकाहुतिभिः तथानं
तादिशिखंड्यंताःअष्टौदेवतास्तैरेवद्रव्यैः प्रतिद्रव्यमष्टाष्टसंख्याकाहुतिभिः ब्रह्मादिदेवताश्चैकैकयाज्याहुत्यायक्ष्ये क्रमेणद्रव्या
ष्टकस्यहोममंत्राः त्र्यंबकं० १ आप्यायस्व० २ ॐनमःशिवाय० ३ तमीशानं० ४ अभित्वादेव० ५ कद्रुद्राय० ६ तत्पुरुषाय० ७ ऋतं०
सत्यंपरंब्रह्म० ८ परिवारदेवतानांनाममंत्राः एवंहोमंसंपाद्यआचार्यंवस्त्रादिनासंपूज्यपीठंव्रतपूर्तयेधवलांगांचदत्वा अन्यान
ष्टौब्राह्मणान्वस्त्रादिनासंपूज्यशालितंदुलोद्भवपक्वान्नपूरितानष्टौकलशान्दक्षिणासहितान्दद्यात्तत्रमंत्रः पक्वान्नपूरितंकुंभंदक्षिणा
दिसमन्वितम् ॥ गृहाणत्वंद्विजश्रेष्ठव्रतसंपूर्णहेतवे ॥ इतिदत्वाब्राह्मणभोजनपुरःसरंस्वयंभुंजीत ॥ ॥ इतिसोमवारव्रतं

॥ ॥ अथश्रावणाद्यसोमवारेशिवामुष्टिव्रतं॥ शिवधर्मोत्तरे॥ दंतधावनपूर्वकंनद्यादौस्नात्वानित्यंकर्मनिर्वर्त्यशिवसन्निधौग
त्वातत्रसंकल्पयेत्॥ तिथ्यादिसंकीर्त्यममइहजन्मनिअखिलपापक्षयपूर्वकंदुःखदारिद्र्यनाशविपुलसुखसौभाग्यैश्वर्यपुत्रपौत्र
प्राप्त्यर्थंश्रीशिवप्रीत्यर्थंपंचवर्षात्मकंपंचधान्येनशिवमुष्टिव्रतंकरिष्येइतिसंकल्प्य गणेशपूजनादिकृत्वाशिवंपंचामृतपुरःसरंसं
पूज्यमंत्रपुष्पांतेधान्यंसमर्प्य॥ प्रथमंशालितंदुलं॥ द्वितीयंयवं तृतीयंगोधूमं॥ चतुर्थंचणकं पंचमंमुद्गंच॥ एकैकंपंचप्रस्थं
प्रस्थंवाअशक्तौनिष्कंचनतुनूनं॥ प्रार्थयेत्॥ प्रसीददेवदेवेशप्रसीदपरमेश्वर॥ प्रसीदसोमसर्वज्ञप्रसीदकरुणाकर॥ शिवःशर्वोम
हादेवोरुद्रोभूतगणेश्वरः॥ ममास्तुसहपार्वत्याशंकरःशंकरस्सदा॥ एवंपंचसंवत्सरंत्रयंएकंवाऽचरेत्॥ समाप्तेउद्यापनंकृत्वापूर्व-
वत्संकल्प्यांतेवृताचार्यः एकलिंगोद्भवपीठेकलशंसंस्थाप्यराजतंपूर्णपात्रंनिधायतत्रहैमींउमेशप्रतिमांराजतंवृषभंसंस्थाप्यलोके
शंवा॥ पूर्ववत्पूजयेत्॥ सुवर्णनिर्मितंधान्यंकृत्वापंचसंख्ययात्रीणिएकैकंवासमर्चयेत्॥ धान्यंसमर्पयेत्॥ सुवर्णबिल्वदलानि
अथवारौप्यमयंकृत्वाधान्यसंख्ययासमर्पयेत्॥ रात्रिंकथाश्रवणादिनानिनयेत्॥ प्रातः पूर्ववत्पूजांकृत्वाअग्निंप्रतिष्ठाप्यान्वाद-

ध्यात्॥ अत्रप्रधानंउमेशंसमित्तिलाज्यद्रव्यैः गायत्रीमंत्रेण अष्टोत्तरशतंजुहुयात् लोकपालान्ब्रह्मादिमंडलदेवताःश्चैकैकयाज्याहु
त्यायक्ष्ये॥ततःशिवंपंचरत्नंसमर्प्यआचार्यायपीठंव्रतपूर्तयेगांचदत्वादक्षिणादिनाप्रतोष्यद्विजदंपतीपूजयेत्॥ पायसान्नेनभोजये
त्॥ स्वयंभुंजीत॥ अनंतपूर्णतास्थालीसर्वकामफलप्रदा॥ द्रौपद्यादीयतेनेन कष्टोत्पत्तिविनाशिनी॥ व्रतेनाराधितंतस्यपंचवर्षेण
एवच॥ तेनव्रतप्रभावेनपुनाराज्यंचप्राप्तवान्॥ सर्वेवर्णाव्रतमाचरेयुः॥एवंयःकुरुतेदेवितवाग्रेव्रतमुत्तमम्॥कामनापूरयेत्तस्यप्राप्त
राज्यमकंटकं॥ तथापिसर्ववर्णानांपुत्रपौत्रप्रवर्धनं॥राज्यार्थीलभतेराज्यंमोक्षार्थीमोक्षमेवच॥ ॥ इतिशिवामुष्टिव्रतं॥ ॥
॥ ॥इतिसोमवारव्रतं॥ ॥अथभौमवासरव्रतं॥ तत्रश्रावणशुक्लप्रथमभौमवारेमंगलागौरीव्रतं॥ भविष्ये॥ ति-
थ्यादिसंकीर्त्यआत्मनोऽवैधव्यपुत्रपौत्राद्यैहिकनानाविधभोगप्राप्तिपूर्वकगौरीलोकप्राप्त्यर्थंआचरितंयत्पंचवर्षात्मकंमंगलागौ-
रीव्रतंतत्संपूर्णफलावाप्तयेतदुद्यापनंकरिष्ये॥ वृताचार्यः एकलिंगोद्भवेब्रह्मादिदेवतास्थापनपूर्वकंदृषदुपरिकलशंप्रतिष्ठाप्य
तत्रहैमींगौरींगौरीर्मिमायेतिमंत्रेणप्रतिष्ठाप्यपूजयेत्॥ परितःपिष्टजान्डमर्वाकारान्षोडशतंतुवर्तियुतान्॥दीपान्प्रज्वाल्यस

मान्साग्रान्षोडशपर्वयुतान्षोडशदूर्वांकुरान्समर्प्य सौभाग्यवस्तुजातं स्वर्णवर्तियुतं राजनदीपं च समर्प्य कथाश्रवणादिना रा
त्रिंनिनयेत्॥ प्रातरग्निं प्रतिष्ठाप्य अन्वादध्यात्॥ गौरीं घृततिलाक्षतबिल्वदलद्रव्यैः प्रतिद्रव्यमष्टोत्तरशतसंख्याकाहुतिभिः ब्रह्मा-
दिदेवताश्चैकैकयाज्याहुत्या यक्ष्ये॥ ततः षोडशाष्टौ चतुरो वा दंपतीन्भावे एकं वा संपूज्य सौभाग्यद्रव्यवस्त्रदक्षिणाफलतांबूलादि
सहितं पक्वान्नपूरितं वंशपात्रं उपायनमिदं देव इति मंत्रं पठं स्तेभ्यो दत्वा तत आचार्यं संपूज्य रौप्यपात्रे स्वर्णवर्तिसंयुतं दीपं कृत्वाः
चार्याय दत्वा सोपस्करं पीठं व्रतपूर्तये गां च दत्वा ताम्रपात्रं पक्वान्नपूरितं वस्त्रादियुतं मात्रे दत्वा परमान्नेन भूदेवान्संतर्प्य आशिषो
गृहीत्वा मौनी इष्टजनैः सह भुंजीत॥ ॥इति मंगलागौरीव्रतं॥ ॥अथ भौमवारव्रतं॥ भविष्ये॥ तत्रादौ यंत्रप्रकारमाह
त्रिकोणं पूर्वमुद्धृत्य पंचधा विभजेत्ततः॥ तृतीयरेखाचिह्नाभ्यां लांछयेत्समभागतः॥ आद्यरेखाग्रयुगलं तृतीयातन्हयोन्यसेत्॥
तृतीयरेखामध्ये तु चिह्नयेत्समभागतः॥ तुर्याचिह्नद्वयेनाथ त्रिभिश्चिह्नैस्तु पंचमी॥ तृतीयाग्रे प्रकुर्वीत पंचम्यामध्यचिह्नगं
तुर्याग्रे योजयेत्सम्यक् पंचम्याचिह्नयोर्द्वयोः॥ युक्त्यामम द्वये दद्यात्त्रिकोणे विंशतिर्भवेत्॥ तृतीयतुर्ययोर्मध्ये त्रिकोणे तु

समर्चयेत्॥ एवंतदग्रतोमंत्रान्त्रिकोणेदक्षिणक्रमात्॥ मंगलाद्यांस्तारपूर्वान्नमोंतानेकविंशतिः॥ एकविंशतिकोष्ठेषुनाममंत्रा
न्समालिखेत्॥ ततःपूजाप्रकर्तव्यापुत्रसंपत्तिहेतवे॥ इतियंत्रं॥ अथपूजाविधिःमार्गशीर्षेमाघेवैशाखेस्कमासेवाशुक्लपक्षेचं
द्रानुकूल्येभौमवासरेअरुणोदयकालेअपामार्गकाष्ठेनदंतधावनंमौनेनकृत्वाऽऽचम्यतिलामलकचूर्णेनांगोद्वर्तनंकृत्वानद्यादौ
गृहेवास्नात्वाधौतरक्तवस्त्रमुत्तरीयंच धृत्वासंध्यादिविधायरक्तचंदनरक्ताक्षतैःरक्तपुष्पैश्चताम्रपात्रस्थजलेनांगारकगायत्र्याअ
ग्निर्मूर्धेतिमंत्रेणवा एकविंशतिवारं अंगारकायार्घ्यंदत्वाततोगृहमागत्यभूमिपतितेनगोमूत्रेणासुरभिगोमयेनहस्तमात्रांभूमिंवि
लिप्यतदुपरिसाग्रंत्रिकोणंरक्तचंदनेनसंविलिख्यतत्रप्रस्थगोधूमराशिंकृत्वातत्रताम्रमयंरक्तंमृन्मयंवाकलशंसंस्थाप्यतदुपरि
ताम्रमयंपूर्णपात्रंनिधायतत्ररक्तचंदनेनत्रिकोणंमंडलंविधायतत्रताम्रमयंभूर्जपत्रमयंवात्रिकोणमेकविंशतिकोष्ठात्मकमेकविं-
शतिनामयुतंयंत्रंस्थाप्यपूजासामग्रींसंपाद्यसंकल्पंकुर्यात्॥ तद्यथा॥ शुद्धासनेउपविश्यप्राणानायम्यदेशकालसंकीर्तनांतेआ
त्मनःऋणाद्यपनुत्तिपूर्वकधनधान्यपुत्रपौत्राद्यभीष्टमनोरथसिध्यर्थंमंगलव्रतंतत्पूजनंचकरिष्यइतिसंकल्प्य गणेशपूजनपू

र्वकं पुण्याहवाचनादि कृत्वा पूजामारभेत् ॥ तत्रादौ देवं प्रार्थयेत् ॥ अथ देवेश तेभक्त्या करिष्येव्रतमुत्तमम् ॥ ऋणदुःखादिनाशाय पु-
त्रसंतानहेतवे ॥ अभीष्टान्मम देवेश कुरु पूर्णान्मनोरथान् ॥ ततो भूतशुद्ध्यादि कृत्वान्यासं कुर्यात् ॥ ॐ मंगलाय नमः शिखायां ॥
भूमिपुत्राय॰ मूर्ध्नि॰ ऋणहर्त्रे॰ ललाटे॰ धनप्रदाय॰ चक्षुषोः स्थिरासना॰ कर्णयोः महाकायाय॰ नासिकयोः सर्वकर्मावरोधकाय॰
मुखे॰ लोहिताय॰ हनौ॰ लोहिताक्षा॰ कंठे॰ सामगानां कृपाकराय॰ स्कंधयोः॰ धरात्मजाय॰ बाह्वोः॰ कुजाय॰ करयोः॰ भौमाय॰ हृ
दये॰ भूतिदाय॰ उदरे॰ भूमिनंदनाय॰ नाभौ॰ अंगारकाय॰ कट्यां॰ यमाय॰ ऊर्वोः॰ सर्वरोगापहारकाय॰ जान्वोः॰ वृष्टिकर्त्रे॰ जंघा
यां॰ वृष्टिहर्त्रे॰ गुल्फयोः॰ सर्वकामफलप्रदाय॰ पादयोः॰ ततो मांमींमूंमैंमौंमः इति षडक्षरैः षडंगन्यासं कृत्वा स्ववामभागे कलशाराध
नं कृत्वा तस्याग्निमतः स्ववामभागे षट्कोणं वृत्तं चतुरस्रात्मकं मंडलं साधारमर्घ्यपात्रं निधाय जलेनापूर्य गंधाक्षतपुष्पादि तत्र प्रक्षिप्य
मंडलेन गायत्र्यावाष्टवारमभिमंत्रयेत् ॥ तद्दक्षिणे त्रिकोणमंडले साधारणं सजलं प्रोक्षणीपात्रं संस्थाप्य गंधपुष्पाक्षतादि प्रक्षिप्य
मूलेनाष्टवारमभिमंत्र्य तज्जलं किंचिदर्घ्यपात्रे निक्षिप्य धेनुमुद्रां प्रदर्श्य प्रोक्षणीपात्रजलेनात्मानं दक्षिणस्य पूजाद्रव्याणि च प्रोक्ष्य

पात्रांतरेस्थापितंयंत्ररूपंदेवंध्यायेत्॥ पिंगाक्षंरक्तवर्णस्फुरतरुदलभंरक्तवस्त्रेणयुक्तंमेषारूढंग्रहेंद्रंह्यभिलषितजनैः पूजितंसु
प्रसन्नं॥ ध्यायेदेतान्दधानंवरदकरयुतंशूलशक्तिंगदांचभौमंनैश्वर्यसिद्धंनिखिलनिधिविभुंमंगलंचिंतयामि॥ एह्येहिभगवा
न्भौमस्थानेचात्रस्थिरोभव॥ त्वयिसर्वमिदंप्रोतंत्रैलोक्यंसचराचरं॥ उज्जयिन्यांसमुद्भूतशूलशक्तिगदाधर॥ भरद्वाजकुलोत्प
न्नस्कंदप्रियतडित्प्रभ॥ यावत्पूजांसमाप्येतनावत्त्वंसन्निधौभव॥ पूजांगृहाणवरदोभव ॐ ह्रींश्रींलंमंगलायनमः॥ अयंमूलमं
त्रः॥ अंगारकायविद्महेभूमिपुत्रायधीमहि॥ तन्नोभौमःप्रचोदयात्॥ इयंगायत्री॥ अग्निर्मूर्धेतिवैदिकोमंत्रः॥ मंगलंसांगंस
परिवारंआवाहयामि॥ प्रत्युपचारंमंत्रत्रयंपठेत्॥ भूमिपुत्रायनमः आसनं॰ धनप्रदाय॰ पाद्यं॥ स्थिरासनाय॰ अर्घ्यं॰ मंगला
य॰ दधिमधुसर्पिर्युतंमधुपर्कं॰ महाकायाय॰ आचमनीयं॰ ऋणहर्त्रे॰ पंचामृतस्नानं॰ ततोगंधादिभिःसंपूज्य॥ पुरुषसूक्तेनाभि
षेकंकुर्यात्॥ सर्वकर्मावरोधकाय॰ शुद्धोदकस्नानं॰ ततःपूर्वस्थापनविधिनास्थापितेकलशेगृहावेप्रतिष्ठेतिप्रतिष्ठाप्यपरितःपू
र्वादिक्रमेणपरिवारान्स्थापयेत्॥ पूर्वेशक्तिं आग्नेयेशूलं दक्षिणेधनुःनैर्ऋत्येशरंपश्चिमेगदां वायव्यांवरदंउत्तरेषडाननं ऐ

शानेधरां॰ आवाह्यसंहेवपूजयेत् लोहिताय॰ वस्त्रं॰ लोहिताक्षाय॰ उपवीतं॰ सामगानांकृपाकराय॰ गंधं॰ धरात्मजाय॰ पुष्पं॰
अथैकविंशतिकोष्ठेषु अंगानिएकविंशतिनामभिः पूजयेत्॥ मंगलाय॰ पादौ॰ भूमिपुत्राय॰ गुल्फौ॰ ऋणहर्त्रेन॰ जंघे॰ धनप्रदा
य॰ जानुनी॰ स्थिरासनाय॰ ऊरू॰ महाकायाय॰ कटी॰ सर्वकर्मावरोधकाय॰ नाभिं॰ लोहिताय॰ उदरं॰ लोहिताक्षाय॰ हृदयं॰ सा
मगानांकृपाकराय॰ करौ॰ धरात्मजाय॰ बाहू॰ कुजाय॰ स्कंधौ॰ भौमाय॰ कंठं॰ भूतिप्रदाय॰ हनुं॰ भूमिनंदना॰ मुखं॰ अंगारका
यन॰ नासिकां॰ यमाय॰ कर्णौ॰ सर्वरोगापहारकायन॰ चक्षुषी॰ वृष्टिकर्त्रे॰ ललाटं॰ वृष्टिहर्त्रे॰ मूर्धानं॰ सर्वकामफलप्रदायन॰
शिखां॰ ततोनानापरिमलद्रव्यार्पणं॰ कुजाय॰ धूपं॰ भौमाय॰ दीपं॰ भूतिदाय॰ गुडमिश्रगोधूमान्ननैवेद्यंसोपस्करंवा भूमिनंद
नायन॰ फलं॰ अंगारकाय॰ तांबूलं॰ यमाय॰ दक्षिणां॰ सर्वरोगापहारकायन॰ नीराजनं॰ नानावैदिकमंत्रपाठपुरःसरं वृष्टिकर्त्रे॰ पु
ष्पांजलिं॰ वृष्टिहर्त्रेप्रदक्षिणां॰ सर्वकामफलप्रदा॰ नमस्कारं भूमिपुत्रमहातेजः स्वेदोद्भवपिनाकिनः॥ धनार्थीत्वांप्रपन्नोस्मि
गृहाणार्घ्यंनमोस्तुते॥ अनेनमंत्रेणरक्तपुष्पाक्षतयुतेनताम्रपात्रस्थजलेनैकविंशतिअर्घ्याणिदद्यात्॥ मंगलाय॰ इदमर्घ्यं-

समर्पयामि ॥ एवमेकविंशतिनाम्नामूहः कार्यः ॥ ततोजपः कार्यः ॥ अस्यश्रीमंगलमंत्रस्य ब्रह्माऋषिः त्रिष्टुप् छंदः मंगलोदेवता
मंबीजं ॥ माहेश्वरीभूमिपुत्रइतिशक्तिः ॥ ममऋणमोचनाद्यभीष्टसिध्यर्थं एकवत्वाधिकद्विसहस्त्रपरिमितजपमहंकरिष्ये
मांमींमूं मैंमौंमः अनेनकरन्यासंहृदयादिन्यासंकृत्वाजपेत् २१०० एवंमूलमंत्रंजप्त्वांतेपूर्ववत् षडंगन्यासंकृत्वाकवचंजपेत् ॥
तद्यथा ॥ शिखायांमंगलः पातुभूमिपुत्रस्तुमूर्धनि ॥ ललाटेऋणहर्ताचचक्षुषोर्धनप्रदः ॥ स्थिरासनःश्रवणयोर्महाकायस्तु
नासिके ॥ आस्यजिह्वौष्ठदंतेषुसर्वकर्मावरोधकः ॥ हनौमांलोहितः पातुकंठेलोहितलोचनः ॥ स्कंधयोरुभयोरक्षेत्सामगानांकृपा
करः ॥ धरात्मजोभुजौपातुकुजोरक्षेत्करद्वयं ॥ भौमोमांहृदयेपातुभूमिजस्तुतथोत्तरे ॥ भूनंदनोथनाभौचकट्यामंगारकोवतु
सक्थिनीमंगलोरक्षेज्जान्वोरोगापहारकः ॥ जंघयोर्वृष्टिकर्ताचवृष्टिहर्ताचगुल्फयोः ॥ पादांगुष्ठौचपादौचसर्वकर्मफलप्रदः ॥ श
क्तिर्मेपूर्वतोरक्षेच्छूलंरक्षतुदक्षिणे ॥ पश्चिमेमांधनूरक्षेदुत्तरेचशरस्तथा ॥ ऊर्ध्वंपिंडाननःपातुअधस्तात्पृथिवीतथा ॥ एवंहिकवचं
जप्त्वापश्चाद्धोमंसमाचरेत् ॥ अथहोमः ॥ तिथ्याद्युच्चार्यमंगलव्रतांगभूतंकृतजपदशांशेनहवनंकरिष्येइतिसंकल्प्य ॥ देवा

ग्रेसन्मृदादित्रिकोणंस्थंडिलंकृत्वास्वगृह्यविधिनाअग्निंप्रतिष्ठाप्यअन्वादध्यात्॥ अत्रखादिरइध्मात्रप्रधानंमंगलंगुडाज्यमि-
श्रिततिलद्रव्येणकृतजपदशांशेनयक्ष्ये॥ मूलमंत्रेणजुहुयात्॥ खर्जूरीफलेनपूर्णाहुतिंहुत्वाहोमशेषंसमापयेत् ॥ततोगायत्रींप
ठित्वामंगलंतर्पयामि इतिगोदुग्धेनतर्पणंकुर्यात्॥ एवमेकविंशतिनाम्नामूहःकार्यः तथैव अनृणोतिमंत्रंपठित्वामार्जनंकुर्यात्
ततोवायनंमंगलरूपिणेद्विजायइदंपाद्यमित्यादिसंपूज्य तांबूलदक्षिणासहितानेकविंशतिसंख्याकान्गुडमिश्रिततिलचूर्णल
ड्डुकान्दद्यात् तत्रमंत्रः॥ मंगलायनमस्तुभ्यंसर्वमंगलकारक॥वायनेनानेनसंतुष्टोममकामान्प्रपूरय॥ अनेनवायनेनऋणमोच
नभौमःप्रीयतां॥ ततःखादिरांगारके ऋणसंज्ञकरेखात्रयंकृत्वावामपादतलेनमार्जयेत्॥ तत्रमंत्रः॥दुःखदौर्भाग्यनाशाय
धनसंतानहेतवे॥ मार्जयाम्यसितारेखास्तिस्रोजन्मत्रयोद्भवाः॥ ततोमंगलस्तोत्रंपठेत्॥ मंगलोभूमिपुत्रश्चऋणहर्ताधनप्रदः
स्थिरासनोमहाकायःसर्वकर्मावरोधकः॥ लोहितोलोहिताक्षश्चसामगानांकृपाकरः॥ धरात्मजःकुजोभौमोभूतिदोभूमिनंदनः॥
अंगारकोयमश्चैवसर्वरोगापहारकः॥ वृष्टिकर्तापहर्ताचसर्वकामफलप्रदः॥ एतानिकुजनामानिनित्यंयःप्रयतःपठेत्॥ ऋणंन-

जायतेतस्यधनंयच्छतिवांछितं॥ उत्तिष्ठब्रह्मणस्पतइतिउत्थाप्यविसर्जयेत्॥कथांश्रुत्वाब्राह्मणभोजनपुरःसरंसगुडगोधूमान्नं
मौनीभुंजीत॥एवंप्रकारेणप्रतिभौमवासरंएकविंशतिभौमवासरपर्यंतंकर्तव्यं॥ततोद्वाविंशतितमेभौमवासरेउद्यापनंकुर्यात्॥
तद्यथा॥तिथ्यादिसंकीर्त्यअभीष्टकामनासिध्यर्थंआचरितंयद्भौमवासरव्रतंतत्संपूर्णफलावाप्तयेतदुद्यापनंकरिष्येइतिसंक-
ल्प्य॥वृतनाचार्यउक्तविधिनासर्वतोभद्रेकलशप्रतिष्ठांतंकृत्वातत्रहैमंमंगलमुक्तपूजाविधिनासंपूज्यसुवर्णपुष्पैर्विशेषपूजांकृत्वा
पुराणपठनादिनारात्रिंनिनयेत्॥प्रातरग्निंप्रतिष्ठाप्यअन्वादध्यात्॥ अत्रप्रधानं॥मंगलंगुडाज्यमिश्रिततिलद्रव्येणाष्टोत्तरसहस्र
संख्याकाहुतिभिः मूलमंत्रेणगायत्र्यावावैदिकेनवाएकविंशतिपरिवारदेवताःतेनैवद्रव्येणाष्टाष्टसंख्याकाहुतिभिः ब्रह्मादिदेवता
श्चैकैकयाज्याहुत्यायक्ष्ये॥मंगलोभूमिपुत्रश्चेत्याद्याएकविंशतिदेवतास्तासांनाममंत्रेणहोमः॥ सर्वंहोमंसंपाद्यपूर्वोक्तएकविंश
तिनामभिः एकविंशतिद्विजान्संपूज्यतेभ्योरक्तचंदनचर्चितान्गुडमिश्रिततिलचूर्णपूरितान्रक्तवस्त्रदक्षिणासहितान्कलशा
न्दद्यात्॥ तत्रमंत्रः॥ मंगलःप्रतिगृण्हातिमंगलोवैददातिच॥मंगलस्तारकोभाभ्यांमंगलायनमोनमः इतिदत्वाआचार्यंरक्तवस्त्र

दिनासंपूज्य नस्मैपीठंव्रतपूर्तयेरक्तांस्करभिंरक्तवृषभंचदत्वाविभवेसतिसोपस्करांशय्यांचदत्वासदन्नेनब्राह्मणान्संतर्प्यदक्षिणा
दिभिःप्रतोष्य आशिषोगृहीत्वाइष्टजनैःसहभुंजीत॥ ॥इतिभौमव्रतं॥ ॥अथशनैश्चरव्रतं॥ स्कांदे॥ श्रावणशु
क्लपक्षाद्यशनिवारे॥ तत्रविधिः॥ प्रातःशमीकाष्ठेनदंतान्विशोध्यनद्यादौस्नात्वानित्यकर्मनिर्वर्त्यपूजासामग्रीमादायश-
मीमूलंतदभावेऽश्वत्थमूलंगत्वातत्रमृदावेदिकांविधायतत्रधनुष्याकारंमंडलंविलिख्यतत्रकृष्णायसनिर्मितांमहिषासनांद्विभुजां
दंडपाशधरांशनैश्चरमूर्तिंविधायकृष्णवस्त्रवेष्टितांचकृत्वाएवंपूर्वपीठिकांसंपाद्यसंकल्पंकुर्यात्॥तद्यथातिथ्यादिसंकीर्त्यआत्मनः
अखिलदुःखदौर्भाग्यनिरसनपूर्वकंइहजन्मनिजन्मांतरेचअतुलसुखपुत्रपौत्रधनधान्याद्यभिवृद्ध्यर्थंशनैश्चरव्रतंकरिष्ये॥ग
णेशपूजनादिविधायपूजामारभेत्॥तत्रादौप्राणप्रतिष्ठांकृत्वाध्यायेत्शनैश्चरंदीर्घदेहंदंडपाशधरंतथा॥पिंगाक्षंस्थूलदंहं
चध्यायामिरविनंदनं॥इतिध्यात्वा॥शमग्निरग्निभिरितिवैदिकेन॥शनैश्चरायनमइतिनाममंत्रेणवापूजयेत्॥तिलतैलेनपुरुषसूक्ते
नतत्सूक्तेनवाभिषेकंकुर्यात्॥कृष्णवस्त्रेणसप्ततंतुभिश्चवेष्टयेत्॥एवंषोडशोपचारैःसंपूज्यसप्तप्रदक्षिणाःसप्तनमस्कारान्कृत्वा

स्तुवीत॥ नमः कृष्णायनीलायश्वेतकंठनिभायच॥ नमस्त्वर्षणगात्रायस्थूलरोम्णेनमोनमः॥ तपसादग्धदेहायनित्यंयोगधरायच
नमस्तेज्ञाननेत्रायकाश्यपायार्कसूनवे॥ इतिस्तुत्वाननोविप्रंसंपूज्यप्रस्थतिलानांवायनंसदक्षिणंदत्वादेवंविसृज्यगृहमागत्यतिलपि
ष्टविमिश्रितान्ब्राह्मणायदत्वास्वयंतथैवभुंजीत॥ एवंप्रकारेणत्रयस्त्रिंशच्छनिवासरपर्यंतंप्रतिशनिवासरंकर्तव्यं॥ असामर्थ्ये
तुश्रावणशनिवासरेषुकर्तव्यं॥ एवंचरित्वांतेउद्यापनंकुर्यात्॥ पूर्वसंकल्पंउक्त्वाशनैश्वरव्रतोद्यापनंकरिष्यइतिसंकल्प्य॥ व्रताचा
र्यउद्यापनविधिनाकलशप्रतिष्ठांतंकृत्वातत्रस्कवर्णशमीपत्रैर्हैमंद्विभुजंशनैश्वरंउक्तविधिनाप्रतिष्ठाप्यसप्ततंतुमितंरुक्मोत्तरीयं
कृष्णवस्त्रसप्तकंचसमर्प्यपूजयेत्॥ ततोऽग्निंप्रतिष्ठाप्यअन्वादध्यात्॥ अत्रप्रधानंशनैश्वरंशमीसमित्तिलाज्यद्रव्यैःप्रत्येकमष्टोत्तरशा
तसंख्याकाहुतिभिः ब्रह्मादिदेवताश्चैकैकयाज्याहुत्यायक्ष्ये॥ ततः सप्तद्विजान्संपूज्यतेभ्योदक्षिणायुतानिसप्ततिलपात्राणिदत्वा
आचार्यायपीठंगांचदत्वातिलमिश्रपक्वान्नेनभूदेवान्संतर्प्यआशिषोगृहीत्वास्वयंभुंजीत॥ ॥ इतिशनैश्वरव्रतं॥ ॥
अथशनिरोहिणीव्रतं भविष्ये॥ ॥ तच्चज्येष्ठशुद्धप्रतिपदियदाशनिवासरोरोहिणीनक्षत्रंचतदाकर्तव्यं॥ तिथ्यादिसंकीर्त्यममे

हजन्मनिजन्मांतरेच्चव्याधिभयदारिद्र्यादिसर्वदुःखनाशनपूर्वकदीर्घायुर्विपुलपुत्रपौत्राद्यभिवृद्धिस्थिरलक्ष्मीकीर्तिलाभशत्रुपरा
जयाद्य भीष्टसिद्ध्यर्थंशनैश्वरप्रीत्यर्थंशनिरोहिणीव्रतंकरिष्ये इतिसंकल्प्य ॥ गणेशपूजनादि विधायसुवर्णादिगुटिकायांरोहिणी
सहितशनैश्वरंलोहंशमग्निरितिमंत्रेणप्रतिष्ठाप्यवक्ष्यमाणप्रकारेणपूजयेत् ॥ तत्रादौध्यानं ॥ नीलांजनसमाभासंरविपुत्रंयमाग्रजं
छायामार्तंडसंभूतंनीलांबरधरंविभुं ॥ चतुर्भुजं मंदगतिंशूलिनंगृध्रसंस्थितं ॥ किरीटिनंधनुष्मंतंचिंतयामिशनैश्वरं ॥ इतिध्यात्वा
शमग्निरितिमंत्रंप्रत्युपचारंपठित्वापूजयेत् ॥ सूर्यपुत्रायनमः ॥ आवाहनं ॥ शनैश्वराय॰ आसनं॰ पंगुशरीराय॰ पाद्यं॰ अर्कनंदना॰
अर्घ्यं॰ यमाग्रजाय॰ आचमनीयं॰ छायासुता॰ स्नानं॰ क्रोधमुखाय॰ वस्त्रं॰ अंतकाय॰ उपवीतं॰ कृष्णाय॰ गंधं॰ रुद्राय॰ पुष्पं॰ बभ्रु
मुखाय॰ धूपं॰ पिंगललोचनाय॰ दीपं॰ काश्यपाय॰ नैवेद्यं॰ यमाग्रजा॰ तांबूलं॰ नीलांजनसमप्रभाय॰ दक्षिणां॰ भास्करनंदनाय॰
नमस्कारं॰ एवंसंपूज्यततस्तिलानांवायनंदत्वादेवंलोहंसदक्षिणंविप्रायदत्वासुवर्णगुटिकांरहसिधृत्वाब्राह्मणभोजनपुरःसरंतिल
मिश्रितपक्वान्नंस्वयंभुंजीत ॥ एवंप्रतिरोहिणीसप्तकपर्यंतंकर्तव्यंप्रतिरोहिण्यामेकोत्तरवारवृत्त्यागुटिकावृद्धिःकर्तव्या ॥ एवंचरित्वा

ष्टम्यां रोहिण्यामुद्यापनं कुर्यात्॥ पूर्वसंकल्पमुक्त्वा उद्यापनं करिष्य इति संकल्प्य वृताचार्यः सर्वतोभद्रस्थकलशे एकोत्तरवारवृत्त्यासं
पादितस्वर्णगुटिकास्वहेमं रोहिणीसहितशनैश्चरं पूर्ववत्संस्थाप्य पूजयेत्॥ अग्निं प्रतिष्ठाप्य अन्वादध्यात्॥ अत्र प्रधानं रोहिणी
सहितशनैश्चरं शमीसमित्सायसाज्यतिलद्रव्यैः प्रत्येकं अष्टोत्तरशतसंख्याकाहुतिभिः ब्रह्मादिदेवताश्चैकैकयाज्याहुत्यायक्ष्ये॥ हो-
ममंत्रस्तु॥ अनृणेतिमंत्रस्य विश्वेदेवा ऋषयः कल्पोक्तदेवता॥ त्रिष्टुप्छंदः हवने विनियोगः ॐ अनृणाऽस्मिन्निति एवं होमं संपा-
द्य सप्त द्विजान्संपूज्य तेभ्यो दक्षिणासहितान् तिलपूरितकरकान् दत्वा आचार्याय शनिप्रतिमां कृष्णां गां च दत्वा ब्राह्मणभोजनपुरःसरं
स्वयं भुंजीत॥ एकोत्तरवारवृत्त्या संपादितगुटिकास्वर्णस्य अंगुलीयकं कृत्वा यावज्जीवं धारयेत्॥ एवं कृते सर्वपीडानिरसनपूर्व
कसर्वमनोरथावाप्तिर्भवति॥ ॥ इति श्रीमच्छित्त॰ व्रतोद्यापनकौमुद्यां वारव्रतानि समाप्तानि॥ ॥ अथ संक्रांतिव्रतानि
॥ ॥ तत्रादौ धान्यसंक्रांतिव्रतम्॥ हेमाद्रौ स्कांदे॥ इदं व्रतमेकवर्षात्मकं॥ तत्र ग्रहणविधिः॥ अयनसंक्रांतौ विषुवसंक्रांतौ
वा व्रतग्रहणं॥ संक्रांतिदिने प्रातः शुक्लतिलैर्नद्यां स्नात्वा गोमयोपलिप्तशुद्धदेशे कुंकुमादिनाष्टदलं पद्मं विरच्य पूजासामग्रीं संपाद्य सं

पाद्यसंकल्पंकुर्यात्॥ तद्यथा॥ तिथ्यादिसंकीर्त्यममाग्निष्टोमादिफलप्राप्तिपूर्वकसप्तजन्मधनधान्यपुत्रादिसमन्वितनिर्व्याधिस्व
रूपत्वादिसिद्धिद्वाराश्रीसवितृरूपीपरमेश्वरप्रीत्यर्थंधान्यसंक्रांतिव्रतंकरिष्ये इतिसंकल्प्य॥ गणेशंसंपूज्यपूर्वनिर्मितपद्मकर्णिका
यांविश्वात्मनेनमइतिनाममंत्रेणआवाह्यपूर्वाद्यष्टपत्रेषुक्रमेणादेवताःआवाहयेत्॥ भास्करं १ रविं २ विवस्वंतं ३ पूषणं ४
आदित्यं ५ तपनं ६ मार्तंडं ७ भानुं ८ एवमावाह्यपूजयेत् अर्घ्यमंत्रः कालात्मन्सर्वदेवात्मन्वेदात्मन्विश्वतोसुख व्याधिमृत्यु
ज्वराशोकसंसारभयनाशन॥ ततःप्रस्थपरिमितंधान्यंसदक्षिणाकंब्राह्मणायदत्वाआशिषोगृहीत्वामौनेनस्वयंभुंजीत॥ एवं
प्रतिसंक्रांतौ॥ संवत्सरांतेउद्यापनंकुर्यात्॥ मंडलेपूर्वोक्तप्रकारेणदेवताआवाह्यस्वर्णनिर्मितार्घ्यपात्रेणार्घ्यंदत्वासंपूज्यद्रो
णपरिमितं तदर्धंतदर्धंवाधान्यमाचार्यायपीठसहितंदत्वाब्राह्मणान्संभोज्यस्वयंभुंजीत॥ ॥इतिधान्यसंक्रांतिव्रतं॥
॥ ॥अथलवणसंक्रांतिव्रतं॥ स्कांदे तिथ्यादिसंकीर्त्यअनेकविधसुखप्राप्तिपूर्वकसूर्यलोकप्राप्तिद्वाराश्रीपरमेश्वरप्रीत्य
र्थंलवणसंक्रांतिव्रतंकरिष्यइतिसंकल्प्य॥ पूर्ववत्सद्योभास्करंसंपूज्यतदग्रेसगुडंलवणपात्रंनिधायदेवंप्रार्थयेत्॥ पूजितस्त्वं

यथाशक्त्याप्रसीदममभास्कर॥ व्रतंसंपूर्णतांयातुत्वत्प्रसादाद्दिवाकर॥ ततःसगुडंलवणंदक्षिणायुतंब्राह्मणायदत्वास्वयंभुंजीत
वत्सरांतेपूर्ववन्मंडलेसौवर्णभानुंसंपूज्यस्वर्णनिर्मितकमलयुतंद्रोणपरिमितंलवणंदक्षिणायुतंदत्वागांचब्राह्मणान्भोजयेत्
॥ ॥इतिलवणसंक्रांतिव्रतं॥ ॥अथभोगसंक्रांतिव्रतं स्कांदे॥ ॥ तिथ्यादिसंकीर्त्यआत्मनोनेकविधभोगप्राप्तिपूर्वकंश्री
परमेश्वरप्रीत्यर्थंभोगसंक्रांतिव्रतंकरिष्येइतिसंकल्प्य॥ पूर्ववत्पद्मेभानुंसंपूज्यत्रिभ्योधिकानिमिथुनानिसंपूज्यतेभ्योवायनानिकुं
कुमकज्जलसिंदूरस्रग्गंधिपुष्पतांबूलशालितंदुलदक्षिणायुतानिदत्वाभुंजीत॥ संवत्सरांतेमंडलेसौवर्णभानुंसंपूज्य द्वादशमि
थुनेभ्यः पूर्वोक्तानिवस्त्रयुग्मसहितानिवायनानिदत्वागांचदत्वाब्राह्मणांन्भोजयेत्॥ ॥इतिभोगसंक्रांतिव्रतम्॥ ॥
अथरूपसंक्रांतिव्रतम्॥ स्कांदे॥ ॥तिथ्यादिसंकीर्त्यममकमनीयरूपप्राप्तिपूर्वकंश्रीपरमेश्वरप्रीत्यर्थंरूपसंक्रांतिव्रतंकरि-
ष्येइतिसंकल्प्य॥ पद्मेपूर्ववद्भानुंसंपूज्यकांस्यपात्रस्थघृतेरूपंवीक्ष्यदद्यात्॥ वत्सरांतेमंडलेसौवर्णभानुंसंपूज्यहोमपात्रस्थ
घृतंहिरण्यसहितंदत्वागांचफलभूयस्त्वकामोघृतधेनुमपिदत्वाब्राह्मणान्भोजयेत्॥ ॥इतिरूपसंक्रांतिव्रतम्॥ ॥

अथतेजःसंक्रांतिव्रतंस्कांदे॥ ॥तिथ्यादिसंकीर्त्यआत्मनोतितेजस्त्वप्राप्तिकामनयाश्रीसवितृप्रीत्यर्थंतेजःसंक्रांतिव्रतंकरिष्य
इतिसंकल्प्य पूर्ववत्सद्मेसवितारंसंपूज्यतत्पुरतःशालितंदुलपूर्णंकरकंसंस्थाप्यतन्मध्येमोदकंतदुपरिदीपंज्वलंतंकृत्वाब्राह्म-
णंसंपूज्यतस्मैदद्यात्॥ संवत्सरांतेमंडलेसौवर्णंभानुंसंपूज्यतदुत्तरतःशालितंदुलपूर्णेताम्रकलशेस्ववर्णनिर्मितंदीपकंकृत्वाब्रा-
ह्मणायदत्वागांकपिलांचदत्वाद्विजान्भोजयेत्॥ ॥इतितेजःसंक्रांतिव्रतं॥ ॥अथसौभाग्यसंक्रांतिव्रतं॥ स्कांदे॥
तिथ्यादिसंकीर्त्यआत्मनोनुपमसौभाग्यप्राप्तिपूर्वकभानुप्रीत्यर्थंसौभाग्यसंक्रांतिव्रतंकरिष्यइतिसंकल्प्य पूर्ववत्सद्मेभानुंसंपू
ज्यसपत्नीकायद्विजायसौभाग्याष्टकयुतंवस्त्रयुग्मसहितंवायनंचदत्वा ऽलवणंमौनीभुंजीत॥ वत्सरांतेमंडलेभानुंसंपूज्यत
त्पुरतोयथाशक्तिलवणाचलंकृत्वातदुपरिकांचनकमलंकृत्वातस्मिन्संपूज्यस्वरभिसहितंविप्रायप्रतिपादयेत्॥ सौभाग्याष्ट
कंतु॥ ऐक्षवंराजिकास्तद्वन्निष्पावाश्चस्वशोभनाः॥ धान्यकंजीवकंचैवकौसुंभंकुसुमंतथा॥ लवणंचाष्टमंतद्वत्सौभाग्याष्टकमु
च्यते॥ ॥इतिसौभाग्यसंक्रांतिव्रतं॥ ॥अथतांबूलसंक्रांतिव्रतं॥ स्कांदे॥ ॥तिथ्यादिसंकीर्त्यआत्मनोभर्त्रासहअतु-

लस्फुरवप्राप्तिपूर्वकसवितृप्रीत्यर्थंतांबूलसंक्रांतिव्रतंकरिष्ये॥ इतिसंकल्प्य॥ पूर्ववद्भानुंसंपूज्य ततोदंपतीन्चंदनादिनासंपूज्य
तयोःसोपस्करंतांबूलंदद्यात्॥ एवंप्रतिदिनंसंवत्सरपर्यंतम्॥अंतेमंडलेपूर्ववद्भानुंसंपूज्यदंपतीसंपूज्यताभ्यामेलालवंगजातीफ
लकंकोलजातीपत्रखदिरादिप्रत्येकंभांडेनिधायरौप्यमयंचूर्णपात्रंपूगप्रस्फोटनंचपूगीफलानिनागवल्लीदलानिचसतिसामर्थ्येसुव
र्णनिर्मितानिकानिचिन्नागवल्लीदलानिचरौप्यादिमयेपात्रेनिधायसंकल्पपूर्वकंदद्यात्॥ तांबूलंश्रीकरंभद्रंब्रह्मविष्णुशिवात्मकं
अस्यप्रदानाद्देवेशपूर्णाःसंतुमनोरथाः॥ इतिदत्वागांचदत्वाब्राह्मणान्भोजयेत्॥ ॥इतितांबूलसंक्रांतिव्रतं॥ ॥अथप्रका
रांतरेणतांबूलव्रतम् ॥ भविष्ये॥ ॥तत्रग्रहणं॥ यदाआषाढशुक्लप्रतिपदिशशिनक्षत्रंतदाग्राह्यम्॥ अथवाआषाढशुक्लद
शम्यांचातुर्मास्यव्रतं॥ ॥तिथ्यादिसंकीर्त्यममतांबूलव्रतकल्पोक्तफलावाप्तयेमहाविष्णुप्रीत्यर्थंतांबूलव्रतंकरिष्ये॥ पीठफणान्वित
शेषेनागकन्यायुतंहरिंपुरुषसूक्तेनसंपूज्यतदग्रेसपत्नीकंद्विजंसंपूज्यसोपस्करंतांबूलंवीटीद्वयंदेवायद्विजायचदत्वानमेत्॥ अंतेका
र्तिकशुक्लैकादश्यांपौर्णमास्यांवाउद्यापनंकुर्यात्॥ तद्यथा॥ तिथ्यादिसंकीर्त्यआत्मनोनेकदानफलप्राप्तिपूर्वकविष्णुलोकप्राप्तिद्वा
राश्रीशेषपर्यंकशायिनागकन्यायुतनारायणप्रीत्यर्थंआचरितंयत्तांबूलव्रतंतत्संपूर्णफलावाप्तयेतांबूलव्रतोद्यापनंकरिष्येइतिसंक

स्प्य॥ गणेशपूजनादिविधाय आचार्यंवृणुयात् ॥ वृताचार्यः पूर्ववन्मंडले ब्रह्मादिदेवताः संस्थाप्य तदुपरि कलशे रौप्यमये शेषे हाटक
निर्मितनारायणं नागकन्यायुतं सहस्रशीर्षेति मंत्रेण संस्थाप्य परितः पूर्वादिदिक्षु ब्रह्माणं ईशानं दुर्गां क्षेत्राधिपतिं च तत्तन्मंत्रैरावाह्य
पुरुषसूक्तेन पंचामृताभिषेकपुरःसरं पूजयेत्॥ नानाविधभक्ष्यभोज्ययुतपायसोपहारं निवेदयेत् ॥ देवाग्रे द्रोणसंख्यापूगानि
यथाशक्तिवा नागपर्णायुतं संस्थाप्य देवं स्तोत्रैः स्तुवीत ॥ ततो दश नव वा ताम्रपात्राणि कुंभान्वा पूगयुतानि रौप्यमयानि नावंतिचूर्ण
पात्राणि तथा तीक्ष्णानि पूगप्रस्फोटनानि तथा स्वर्णनिर्मितानि कानिचिन्नागवल्लीपत्राणि तथा एलालवंगादिमुखवासद्रव्याणि
पात्राणि रौप्यमयानि तत्तद्रव्यपूरितानि च नव वा पंच वा नवके निधाय वस्त्रद्वयेन संवेष्ट्य सप्तधान्योपरि देवाग्रे निधाय तत्र नागरूपं ध्याये
त् पूजयेत्प्रार्थयेच्च ॥ नवनागमहाराज बल्यानवप्रपूजनात् ॥ ईप्सितं देहि मे शीघ्रं सर्वसौख्यं सदा प्रभो ॥ ततो गीतवादित्रपुरा
णपठनादिना रात्रिं निनयेत् ॥ प्रातर्देवं संपूज्य अग्निं प्रतिष्ठाप्य अन्वादध्यात् अत्र प्रधानं नारायणं अतो देवा इति मंत्रेण खंडमि-
श्रितपायसाज्यद्रव्येण अष्टोत्तरसहस्रसंख्याकाहुतिभिः तथा समस्तव्याहृतिमंत्रेण पलाशसमित्तिलव्रीहिद्रव्यैः प्रत्येकमष्टो-

त्तरशतसंख्याकाहुतिभिर्ब्रह्माद्यावरणदेवताः पायससमित्तिलव्रीहिद्रव्यैः अष्टाविंशतिसंख्याकाहुतिभिः मंडलदेवताश्चैकैक-
याज्याहुत्यायक्ष्ये॥ एवंहोमंसंपाद्यदंपतीनवकंवस्त्रादिनापूज्यपूर्वंस्थापितंशूर्पनवकंतेभ्योदद्यात् तत्रमंत्रः॥ तांबूलंश्रीकरंभद्रं-
ब्रह्मविष्णुशिवात्मकं॥ अस्यप्रदानाद्देवेशसफलंमेभिकांक्षितं॥ ततस्तेभ्योनवगोदानानितदभावेतन्मौल्यंवादक्षिणात्वेनदत्वादे
वंप्रार्थयेत्॥ तांबूलदानमाहात्म्यात्प्रीतोभवजनार्दन॥ संपूर्णंकुरुमेदेवकांक्षितंपुरुषोत्तम॥ ततःपीठमाचार्यायदत्वाकपिलांगांच
दत्वाब्राह्मणभोजनपुरःसरंस्वयंभुंजीत॥ ॥इतितांबूलव्रतं॥ ॥ अथविशोकसंक्रांतिव्रतंस्कांदे॥ ॥तिथ्यादिसंकीर्त्यआत्म
नोविशोकसमन्वितपुत्रपौत्रादिवृद्धिद्वारासवितृप्रीत्यर्थंविशोकसंक्रांतिव्रतंकरिष्येइतिसंकल्प्य॥ पद्मेपूर्ववद्धानुंताम्रपात्रेसंपू
ज्यरक्तवस्त्राभ्यांपरिधायपूर्ववदर्घ्यंदत्वाब्राह्मणायगुडपूर्णकुंभंसदक्षिणाकंदद्यात्॥ वत्सरांतेमंडलेहैमंभास्करंसंपूज्यगुडपर्व
तेनसहपीठंकपिलासहितंदद्यात्॥ ॥इतिविशोकसंक्रांतिव्रतं॥ ॥अथआयुःसंक्रांतिव्रतं॥ स्कांदे॥ तिथ्यादिसंकीर्त्या
त्मनोदीर्घायुस्तेजस्त्वपूर्वकापमृत्युराहित्यकामनयासवितृप्रीत्यर्थंआयुःसंक्रांतिव्रतंकरिष्यइतिसंकल्प्यपाद्मेपूर्ववद्धानुंसंपूज्य

ब्राह्मणायकांस्यपात्रस्थितंगोघृतंदद्यात् ॥ वत्सरांतेमंडलेहैमंभानुंपूर्ववत्संपूज्य द्वात्रिंशत्पलमितेकांस्यपात्रेगोघृतंनिधायसहिर
ण्यंब्राह्मणायदद्यात् ॥ तत्रमंत्रः॥ कांस्यपात्रस्थितंगव्यमायुरारोग्यकारकं॥ सहिरण्यंददाम्येवंव्रतसंपूर्णहेतवे ॥ ततःकपिलांगां
दत्वाद्विजान्भोजयेत् ॥ ॥ इत्यायुःसंक्रांतिव्रतं॥ अथधनसंक्रांतिव्रतं॥ ॥ हेमाद्रौस्कांदे॥ तिथ्यादिसंकीर्त्यआत्मनोविपुलधन
प्राप्तिपूर्वकआयुरारोग्यपुत्रपौत्रादिप्राप्तिकामनयासवितृप्रीत्यर्थंधनसंक्रांतिव्रतंकरिष्येइतिसंकल्प्य ॥ पद्मेवारिपूर्णकलशंनिधा
यतत्रसुवर्णपात्रेभास्करंसंपूज्यसहिरण्यंकलशंद्विजायदद्यात्॥ एवंप्रतिमासंवत्सरांतेपूर्ववन्मंडलेयथाशक्तिघटितसुवर्णकलशे
पद्महस्तंहैमंभानुंसंपूज्यसुवर्णधेनुसहितंपीठंद्विजायदत्वासदन्नेनद्विजान्भोजयेत् ॥ सर्वसंक्रांतिव्रतेष्वितिकर्तव्यताधान्यसं
क्रांतिवत्ज्ञातव्या॥ ॥ इतिधनसंक्रांतिव्रतं॥ ॥ इतिश्री० व्रतोद्यापनकौमुद्यांसंक्रांतिव्रतानिसमाप्तानि ॥ अथव्य
तीपातयोगव्रतम्॥ वाराहे तत्रव्रतग्रहणविधिः॥ ॥ मार्गशीर्षादिशुभमासेयदाव्यतीपातयोगस्तद्दिनेनद्यादौप्रातःस्नात्वाप
वमानीर्जप्त्वासंकल्पंकुर्यात्॥ तद्यथातिथ्यादिसंकीर्त्यआत्मनोनिरतिशयैहिकसुखप्राप्तिसकलपापक्षयपूर्वकदिव्यविमानारू

दगीतनृत्यविलास्यप्सरोगणैःवीज्यमानसकलभोगयुतकल्पकोटिसूर्यलोकनिवासोत्तरपुत्रपौत्रादिसकलसंपत्सहितमहैश्वर्यादिगु
णयुक्तराजराजत्वकामोमुमुक्षुकामोवाव्यतीपातयोगव्रतंकरिष्यइतिसंकल्प्य॥गणेशपूजनादिनिर्वर्त्यशुद्धभूमौपंचरंगोपेतकमलेक
लशस्थापनप्रकारेणशर्करापूरिततामकलशंप्रतिष्ठाप्यतत्रताम्रमयेपूर्णपात्रेकांचनाब्जेअष्टादशभुजंकांचनव्यतीपातविग्रहंना
ममंत्रेणप्रतिष्ठाप्यपूजयेत्॥ ततःपंचरत्नान्वितपुष्पांजलिंदद्यात्॥ तत्रमंत्रः॥ नमस्तेस्तुव्यतीपातसोमसूर्यसुतप्रभो॥य
द्दानादिव्रतंकिंचित्तद्दानंतमिहास्तुमे॥ इतिदत्वायथाशक्तिसुवर्णादिदत्वापुराणपठनादिनारात्रिंनिनयेत्॥ तद्दिनेउपवा
सःप्रातर्देवंसंपूज्यसपत्नीकंद्विजंचसंपूज्यतत्पीठंसुवर्णसहितंतस्मैदत्वाब्राह्मणभोजनपुरःसरंस्वयंभुंजीत कुर्यादेवंमासिमासिव्यतीपा
तांस्त्रयोदश॥चतुर्दशेव्यतीपातेकुर्यादुद्यापनंशुभं पूर्वोक्तसंकल्पांतेआचरितस्यव्यतीपातव्रतस्यसांगतासिद्ध्यर्थंतदुद्यापनाख्यंकर्मक
रि॰इतिसं॰॥वृताचार्यःसर्वतोभद्रस्थशर्करापूरितकलशेताम्रमयंपूर्णपात्रंनिधायतत्रसुवर्णपद्मेअष्टादशभुजंव्यतीपातविग्रहंसो
वर्णंसंपूज्यपूर्ववत्पुष्पांजलिंदत्वारात्रिंनिनयेत्॥प्रातरग्निंप्रतिष्ठाप्यअन्वादध्यात्॥अत्रप्रधानंदेवंव्यतीपातंक्षीरवृक्षसमिदा

ज्यपयः फलद्रव्यचतुष्टयेन प्रत्येकमष्टोत्तरशतसंख्याकाहुतिभिः ब्रह्मादिदेवताभ्यो एकैकयाज्याहुत्यायक्ष्ये ॥ ततआचार्यं संपूज्य तस्मै सो
पस्करां शय्यां पीठं च दद्यात् तत्र मंत्रः ॥ वंदे व्यतीपातमहं महांतं रवींदुसूनुं सकलेष्टसिद्ध्यै ॥ समस्तपापस्य मम क्षयोऽस्तु पुण्यस्य वृ
द्धिर्मम सर्वदास्तु ॥ इतिस्तुत्वाशैयादि सहितं पीठं व्रतपूर्तये गां च दत्वा ब्राह्मणान् भोजयेदिति ॥ ॥ इति व्यतीपातव्रतं ॥ अथ
प्रकारांतरेण नारदीयपुराणोक्तं व्यतीपातव्रतं ॥ ॥ तिथ्यादि संकीर्त्य मम सकलपापक्षयपूर्वक अभीष्टसिद्ध्यनंतर विष्णुसायुज्य
कामः व्यतीपातव्रतं करिष्य इति संकल्प्य ॥ व्यतीपातदिने प्रातः पंचरंगोपेतपद्मे गोक्षीरपूरितं कांस्यभाजने चतुर्भुजं चक्राद्यायुधोपेतं
सौवर्णपद्महस्तं लक्ष्म्यान्वितं विष्णुं विष्णोरराटमसीति मंत्रेण संस्थाप्य जातीपुष्पादिना पुरुषसूक्तेन संपूज्य शर्करोपेतपायसोपहा
रं निवेद्य देवं प्रार्थयेत् ॥ व्यतीपातदिने देव नवसर्वसमर्पितम् ॥ भवत्वनंतफलदं मम जन्मनि जन्मनि ॥ ततो द्विजं संपूज्य तिलपूर्णश
रावं सगुडं सरूवर्णं दत्वा सोपस्करां शय्यां पीठं गां च दत्वा ब्राह्मणान्भोजयेदिति ॥ ॥ इति व्रतोद्यापनकौमुद्यां व्यतीपातव्रतं ॥ ॥
॥ ॥ अथ लक्षपूजाविधानं ॥ ॥ तत्रादौ शिवलक्षपूजाविधिः ॥ ब्रह्मांडपुराणे ॥ ॥ माघादिपुण्यमासेषु चातुर्मास्ये वा श्रावणे

विशेषेण चंद्रानुकूल्ये शुभे दिने प्रातर्नद्यादौ स्नात्वा नित्यकर्म निर्वर्त्य देवागारं प्रविश्य तिथ्यादि संकीर्त्य अखिलपापक्षयपूर्वक ऐहिकामु
ष्मिकनिरवधिसुखप्राप्तिद्वारा॰ मुककामनया वा उमासहितसदाशिवप्रीत्यर्थं अमुकलक्षपूजां करिष्ये इति संकल्प्य ॥ पीठे शिवं संपूज्य
सहस्रनामभिः मूलमंत्रेण वा तद्द्रव्येण पूजयेत् ॥ प्रत्यहं पंचामृताभिषेकः कर्पूरार्तिक्यं दध्योदनोपहारश्च प्रथमदिने यावती संख्या तावं
ती समाप्तिपर्यंतं ॥ अयुतांते सुवर्णपुष्पमभावे लक्षांते ॥ समाप्तिदिने विशेषेण शिवं संपूज्य शतपलपरिमितपंचामृतेन स्नानं ॥ ना-
लिकेरार्घ्यं ॥ शिवोपरि ध्वजपताकारोपणं श्वेतवस्त्रद्वयदानं च ॥ ततः पुष्पांजलित्रयमष्टभिर्नामभिः ॥ भवाय॰ शर्वाय॰ रुद्राय॰ पशुप
तये नमः उग्राय॰ महते॰ भीमाय॰ ईशानाय॰ इति दत्वा प्रार्थयेत् ॥ विरूपाक्ष महेशान विश्वरूप महेश्वर ॥ मया कृतां लक्षपूजां गृहीत्वा
वरदो भव ॥ ततो नमेत् ॥ मृत्युंजयाय यज्ञाय देवदेवाय शंभवे ॥ आश्रितेशाय शर्वाय महादेवाय ते नमः ॥ नमः शिवाय शांताय सगणाय
ससूनवे ॥ सर्वेश्वराय देवाय कारणत्रयहेतवे ॥ ततो यथाशक्ति ब्राह्मणान् भोजयेदिति ॥ व्रतपूर्तये गां च दद्यात् ॥ पूजाद्रव्याणि ॥
चंपकैर्मल्लिकापुष्पैर्जातीकिंशुकपाटलैः ॥ द्रोणपुष्पैः कदंबैश्च बिल्वशाखादलैस्तथा ॥ नागवल्लीदलैर्वापि रत्नैर्नानाविधैरपि ॥ नत्त

कालोद्भवैः पुष्पैः पल्लवैः कोमलैरपि ॥ धान्यैश्च विविधैः शुद्धैरखंडैर्व्रीहितंदुलैः ॥ लक्षपूजां प्रकुर्वीत नामभिर्मूलमंत्रतः इति लक्षपू-
जा ॥ ॥ अथ प्रकारांतरेण शिवलक्षपूजाविधानं ॥ अग्निपुराणे ॥ पूर्ववद्देवं संपूज्य सहस्रनामभिः ॐ नमः शिवायेति वा मंत्रेण पुष्पा
दि एकरूपतया समाप्तिपर्यंतं समर्प्य अंते शुभदिने उद्यापनं कुर्यात् ॥ तिथ्यादि संकीर्त्य मम अनेकजन्मार्जितदुरितादिनिवृत्तिपूर्वकं ऐ
हिक पुत्रपौत्रादिविविधसुखप्राप्त्यनंतरशिवलोकनिवासकामनया कृतं यल्लक्षपूजाविधानं तत्संपूर्णफलावाप्तये तदुद्यापनाख्यं क
र्म करिष्ये ॥ यदर्पितं तंदुलैरेव संकल्पे कार्यः ततो वृताचार्यः वेदिकायां लिंगतोभद्रस्य कलशे धान्यपूरितपूर्णपात्रे मध्ये सौवर्णं महेशं
नमः शंभवे च मयोभवे चेति मंत्रेण संस्थाप्य तद्वामभागे सौवर्णीं गौरीं च गौरीर्मिमायेति मंत्रेण संस्थाप्य पुरतो राजतं वृषभं वृषभं मे
ति संस्थाप्य परिवारदेवताः स्थापयेत् ॥ पूर्वादिदिक्षु ॥ अधर्मं अवैराग्यं अनैश्वर्यं महेश्वरं तद्बहिः ऐशान्यां ईशानवक्त्राय पूर्वे त
त्पुरुषाय दक्षिणे ॥ अघोरवक्त्राय ॥ पश्चिमे सद्योजातवक्त्राय उत्तरे वामदेववक्त्राय पुनः पूर्वादिषु वामायै० ज्येष्ठायै० काल्यै०
उन्मन्यै पुनः पूर्वामारभ्यैशानीपर्यंतं अजैकपदे० अहिर्बुध्न्याय० भवाय० शर्वाय० उमापतये० रुद्राय० पशुपतये० शंभवे० वरदाय०

शिवाय॰ ईश्वराय॰ पुनः पूर्वे नंदिकालौ दक्षिणे भृंगिचंडौ पश्चिमे वृषस्कंधौ उत्तरेदेशकालौ ततइंद्रादिलोकेशान् एवंसंस्थाप्यपू
जयेत्॥ ध्यानं ॥ शुद्धस्फटिकसंकाशंत्रिनेत्रंचंद्रशेखरं॥भस्मोद्धूलितसर्वांगंहृच्चिंत्यंभक्तवत्सलं॥स्थापनमंत्रेणपूजयेत्॥ दशैकं
वासुवर्णपुष्पंसमर्प्यनमःशिवायेतिनमस्कारः पुराणपठनादिनारात्रिंनिनयेत्॥प्रातरग्निंप्रतिष्ठाप्यअन्वादध्यात् प्रधानं देवं
सोमंमहेशंतिलद्रव्येणायुतसंख्याकाहुतिभिः सहस्रपरिमिताभिर्वापरिदेवतामंडलदेवताश्चएकैकयातिलाहुत्याज्याहुत्यायक्ष्ये
स्थापनमंत्रेणाहोमः ॥पुष्पाद्यर्पणमंत्रेणवा होमांतेआचार्यसंपूज्यपीठंगोमिथुनंचप्रतिपाद्यअधिकफलप्राप्तयेसोपस्करांशय्यां
चदत्वाषोडशद्विजान्विशेषात्कारेणसंपूज्यदक्षिणांचदत्वासदन्नेनद्विजान्संतर्प्य ॥ इतिप्रकारांतरेणशिवलक्षपूजाविधा
नं॥ ॥अथविष्णुलक्षपूजाविधानं॥ अग्निपुराणे ॥ ॥चातुर्मास्येतुसंप्राप्तेलक्षपूजांसमाचरेत्॥माघादिपुण्यमासेषुलक्षपू
जाहरेःस्मृता॥ यद्यद्दृनोभवेत्पुष्पंविष्णवेतत्तदर्पयेत्॥ अतसीतुलसीधात्रीपद्मंदूर्वांकुरस्तथा॥ करवीरंकर्णिकारंशतपत्रंचकेत
कं॥चंपकंमोगरंचैवसौवीरंकनकंतथा॥जातीपुष्पंपाटलकंपुन्नागंचकदंबकं॥ बादरंचामरंपूगंफलैरन्यैश्चपूजयेत्॥ सुगंधैर्न्न

तुसंभूतैः शस्तैःपादपपल्लवैरिति॥ यद्यत्पूजयतेपुष्पंतत्स्वरूपंहिरण्मयं॥ कारयेच्छतकेचैकंसहस्रेवापिकारयेत्॥ लक्षेवादापये
द्धीमान्यथावित्तानुसारतः॥ विष्णोर्नामसहस्रेणगायत्र्यामूलमंत्रतः॥ सहस्रंद्विसहस्रंवात्रिसहस्रंयथाविधि॥ उपक्रमदिनेया
वत्प्रत्यहंतावतीभवेत्॥ इति॥ तिथ्यादिसंकीर्त्यअखिलनानाविधपातकशमनपूर्वकऐहिकामुष्मिकनिरतिशयानंदप्राप्तिद्वा
राश्रीलक्ष्मीनारायणप्रीत्यर्थंतुलस्यादिलक्षपूजांकरिष्येइतिसंकल्प्य पीठेपुरुषसूक्तेनदेवंसंपूज्यनामभिस्तुलस्यार्घ्यर्पयेत्॥
समाप्तौउद्यापनंकुर्यात्॥ पूर्वसंकल्यांतेअमुकलक्षपूजोद्यापनंकरिष्यइतिसंकल्प्य॥ सायंव्रताचार्योवेदिकायांसर्वतोभद्रेब्रह्मा
दिदेवतास्थापनपूर्वकंकलशंप्रतिष्ठाप्यतत्रदेवंप्रपूजयेत्॥ तत्रायंक्रमः॥ सर्वतोभद्रेब्रह्मादिदेवताःसंस्थाप्यतदुपरिप्रस्थतिलपुंजं
तदुपरिप्रस्थगोधूमपुंजंतदुपरिप्रस्थपरिमितशुद्धतंदुलपुंजंकृत्वातत्रकुंकुमेनाष्टदलपद्मंविरच्यतन्मध्येताम्रमयेपिधानसहि
तंताम्रकलशंप्रतिष्ठाप्यतत्रसौवर्णंचतुर्भुजंलक्ष्म्यालिंगितवामांगंनारायणंसहस्रशीर्षेतिमंत्रेणसंस्थाप्यपुरतःसौवर्णंरा
जतंवा गरुडंसामध्वनिशरीरस्थंवाहनंपरमेष्ठिनः॥ विषपापहरोनित्यमतःशांतिंप्रयच्छमेइति ततईशान्यादिविदिक्षुशंखं

चक्रंगदांपद्मंच ततःपरितोलोकेशान्संस्थाप्यपूजयेत्॥ प्रातरग्निंप्रतिष्ठाप्य अन्वादध्यात्॥ अत्रप्रधानं लक्ष्मीनारायणं ॐ
नमोनारायणायेतिमंत्रेणमधुलाजामिश्रिततिलपायसघृतचरुद्रव्यचतुष्टयेनप्रतिद्रव्यमष्टोत्तरसहस्राहुतिभिरष्टोत्तरशता
हुतिभिर्वातथाचतुष्टयेन अयुताहुतिभिः सहस्राहुतिभिर्वासहस्रनाममंत्रैर्यक्ष्ये परिवारदेवतामंडलदेवताश्चैकैकयाज्या
हुत्यायक्ष्ये ततआचार्यायपीठमनेनमंत्रेणदद्यात्॥जलशायीब्रह्मपितायज्ञर्भैसचराचरं॥ अनंतभोगशयनः प्रीयतांमेज
नार्दनः॥ इतिदत्वागांपयस्विनींचदत्वाऽधिकफलप्राप्तयेसोपस्करांशय्यांचदत्वादशाधिकान्द्विजान्सदन्नेनभोजयेत्इति॥ ए
वमेवविधानेनगणेशांबिकयोर्नृप॥ तत्तन्मंत्रेणपूजातुतत्तन्नामसहस्रकैः॥गणेशेलड्डुकैर्होमंपंचरवाद्यैरथापिवा॥ पायसे
नतुदेव्याश्चतिलैर्वाकेवलैरपि॥एवंकृत्वाविधानेनस्वर्गलोकेमहीयते॥ इतिविष्णुलक्षपूजाविधानं॥ ॥ अथलक्षनम-
स्कारव्रतं॥ भविष्ये॥ ॥ वसिष्ठउवाच॥ ॥ब्रह्महत्यादिपापानांप्रायश्चित्तंयदीच्छसि॥ तदालक्षनमस्कारव्रतंकुरुमही
पते॥ चातुर्मास्येतुसंप्राप्तेकेशवेशयनंगते॥ आषाढस्यसितेपक्षेएकादश्यांसमारभेत् कार्तिकस्यसितेपक्षेपौर्णमास्यांसमा

पयेत्॥ मार्गशीर्षे माघे चैत्रे वैशाखे वा पूर्णिमायां समापयेदिति॥ तिथ्यादिसंकीर्त्य मम अनेकजन्मोपार्जितनानाविधपातकशमनपूर्वकातुलभोगप्राप्तिद्वारा श्रीपरमेश्वरप्रीत्यर्थं विष्णोरमुकदेवस्येति वा लक्षनमस्कारव्रतमहं करिष्ये इति संकल्प्य॥ तुलस्या अग्रे अश्वत्थमूले गंगातीरे गवां गोष्ठे वा अन्यत्र शुभस्थले वा यद्देवताप्रीतये व्रतं तं देवं पीठे पुरुषसूक्तेन संपूज्य॥ नमोस्त्वनंतायेति स्कत्वा तद्देवतानाममंत्रेण तत्तद्देवताप्रकाशकवैदिकमंत्रेण मूलमंत्रेण वा नमस्कारान्॥ अष्टांगानेकरूपेण समाप्तिपर्यंतं कुर्यात्॥ समाप्तौ उद्यापनं कुर्यात्॥ पूर्वसंकल्पांते लक्षनमस्कारव्रतस्य सांगतासिद्ध्यर्थं तदुद्यापनं करिष्य इति संकल्प्य॥ वृताचार्यः सर्वतोभद्रे कलशोपरि हैमं देवं तद्देवतानाममंत्रेण संस्थाप्य पूजयेत् विशेषार्घ्यत्रयं दद्यात्॥ देवदेव जगन्नाथ सर्वक्रतुफलप्रद॥ व्रतेनानेन संतुष्टो गृहाणार्घ्यं मयार्पितमिति॥ ततोग्निं प्रतिष्ठाप्य अन्वादध्यात् अत्र प्रधानं॥ देवं विष्णुं अमुकं वा सप्ताहुत्या पौरुषेण चरुतिलव्रीहिपलाशसमित्सर्पिर्द्रव्यैः प्रतिद्रव्यं यक्ष्ये॥ ब्रह्मादिदेवताश्चैकैकयाज्याहुत्या यक्ष्ये॥ ततः पीठं गां च आचार्याय दत्वाऽष्टोत्तरशताधिक द्विजान् यथाशक्ति वा भोजयेदिति॥ ॥इति लक्षनमस्कारव्रतं॥ ॥अथ लक्षप्रदक्षिणाविधानं॥ ॥विष्णुध-

र्मोत्तरे ॥ ॥आषाढशुक्लपूर्णिमायांप्रारंभः॥ ॥कार्तिक्यांसमापनं॥अथवाशुभमासेवाप्रारंभसमापने॥स्नात्वालयेश्वत्थमूले
तुलस्यागोव्रजेथवा॥कुर्यात्प्रदक्षिणाःसर्वाःपूजयित्वायथाविधि ॥तिथ्यादिसंकीर्त्यआत्मनोखिलपापरोगपीडानिरसनपूर्व-
काभीष्टसिद्धिद्वाराश्रीपरमेश्वरप्रीत्यर्थंविष्णोरमुकदेवस्येतिवालक्षप्रदक्षिणाव्रतंकरिष्येइतिसंकल्प्य॥गणेशादिसंपूज्यपूजा
सामग्रींगृहीत्वाअश्वत्थादिसमीपंगत्वापुरुषसूक्तेनसंपूज्यसहस्रनामादिपठन्करचालनादिरहितःएकाग्रचित्तःप्रदक्षिणाःए
करूपतयासमाप्तिपर्यंतंकुर्यात्॥ अंतेउद्यापनंकुर्यात्॥अमुककामनयाकृताःलक्षप्रदक्षिणास्तत्साद्गुण्यार्थंतदुद्यापनंकरिष्येइ
तिसंकल्प्य॥ वृताचार्यःसर्वतोभद्रेकलशोपरिहैमंकृतप्रदक्षिणंदेवंतत्तन्मंत्रेणसंपूज्यसाष्टांगंप्रणमेत्॥ ततोग्निंप्रतिष्ठाप्यान्वाद
ध्यात्॥प्रधानंदेवंविष्णुंविष्णुगायत्र्याष्टोत्तरशतसंख्ययाचर्वाज्याहुतिभिःब्रह्मादिदेवताःएकैकयाज्याहुत्यायक्ष्ये॥ततःपीठंकपिलां
गांचदत्वायथाशक्तिब्राह्मणान्भोजयेत्॥अत्रयद्देवताकप्रदक्षिणास्तद्देवताप्रकाशकोमंत्रः॥ पूजादौग्राह्यः॥ ॥इतिल
क्षप्रदक्षिणाविधानं॥ ॥अथप्रकारांतरेणअश्वत्थप्रदक्षिणाविधिः॥ भविष्ये॥ संकल्पादिपूर्ववत्॥ इयान्विशेषः॥आदा

वाराधयेद्विष्णुंध्यानावाहनपूर्वकं॥ तथैवपिप्पलतरुंनारायणस्वरूपिणम्॥ अर्चयेत्पुरुषसूक्तेनउपचारैश्चषोडशैः॥ ततः प्रदक्षिणं
कुर्यात्तत्सर्वंसफलंभवेत्॥ लक्षमेकंद्विलक्षंवात्रिचतुःपंचलक्षकं॥ कार्यस्यगौरवाज्ज्ञेयंद्वादशांतंसमाचरेत्॥ ब्रह्मचारीहविष्या
शीत्यधःशायीजितेंद्रियः॥ मौनीध्यानपरोभूत्वापिप्पलस्यस्तुतिंपठेत्॥ विष्णोर्नामसहस्रंचपौरुषंवैष्णवंतथा॥ ततोलक्षदशांशे
नसघृतंपायसंजुहुयात्॥ तर्पणंतद्दशांशेनभोजनंतद्दशांशतः॥ होमादौविष्णुगायत्रीनामसहस्रंवाप्राह्यं॥ होमांतेद्रोणपरिमिततिलपुंजोपरिपलादधिकरौप्यपीठोपरिसुवर्णादधिकहेममश्वत्थतरुंसंस्थाप्यश्वेतवस्त्रेणसंछाद्यसंपूज्यचद्विजायदद्यात्॥ ॥
तत्रमंत्रः॥ ॥पिप्पलोवृक्षराजेंद्रोत्यग्निगर्भस्त्वमेवच॥ प्रभुर्वनस्पतीनांचपूर्वजन्मनियत्कृतं॥ अघौघनाशयक्षिप्रंतवरूप
प्रदानतः॥ ततोद्विजंप्रार्थयेत् ॥अमुंतरुंगृहाणत्वंविष्णुरूपद्विजोत्तम॥ स्वीकृत्यदुष्कृतंघोरंक्षिप्रंशांतिंप्रयच्छमे॥ व्रतपूर्त्ये
येशुक्लांगांचदद्यादिति ॥ ॥इत्यश्वत्थप्रदक्षिणाविधानं॥ ॥इतिश्रीमच्चित्तपावन॰ व्रतोद्यापनकौमुद्यांलक्षपूजालक्षनमस्कारलक्षप्रदक्षिणाविधानंसमाप्तं॥ ॥अथलक्षवर्तीव्रतं॥ ॥तत्रादावेकसूत्रवर्तिकाव्रतं॥ वायुपुराणे ॥

श्रावणशुद्धप्रतिपदारभ्यकार्त्तिकपौर्णमासीपर्यंतंप्रत्यहमेकंसहस्रवर्त्तिकोद्दीपनंकार्यं॥ अंतेउद्यापनं ॥अथवामाघेवैशाख·
पूर्णिमायां॥ एतेषामभावेशुभकालेकार्यं ॥तिथ्यादिसंकीर्त्यात्मनोरजःसंपर्कादिविविधपातकक्षयागम्यागमनकोटिनाशवि
विधैहिकपुत्रपौत्रादिसुखप्राप्तिपूर्वकविष्णुलोकप्राप्तिद्वाराश्रीपरमेश्वरप्रीत्यर्थमाचरितंयल्लक्षवर्तीव्रतंतत्संपूर्णफलावाप्तयेन
दुद्यापनाख्यंकर्मकरिष्यइतिसंकल्प्य॥ वृत्वाचार्यः ॥सर्वतोभद्रेकलशंप्रतिष्ठाप्य तन्मध्यदेशे इदंविष्णुरितिमंत्रेणहैमंश्रियास
हितंविष्णुंतद्दक्षिणेसावित्र्यासहितंब्रह्माणं ब्रह्मजज्ञानमितिमंत्रेण विष्णोरुत्तरे उमासहितंशंभुंनमः शंभवेचमयोभवेचेतिमं
त्रेण इतिदेवतात्रयंसंस्थाप्य पुरतोराजतंगरुडंप्रतिष्ठाप्य पूजयेत्॥ चंदनानंतरमंगपूजा ॥कालायनमःशिरःपूजयामि॥
विष्णवे॰ ललाटं॰ वन्हये॰ नेत्रे॰ रवये॰ कर्णौ॰ दीप्ताय॰ नासां॰ निशाकराय॰ मुखं॰ रुद्राय॰ कंठं॰ शेषाय॰ स्कंधौ॰ जगद्व्या-
पिने॰ बाहू॰ तेजोरूपाय॰ स्तनौ॰ महेश्वराय॰ वक्षः॰ निरंजनाय॰ उदरं॰ फलाध्यक्षाय॰ नाभिं॰ विश्वरूपिणे॰ कटिं॰ जगत्प्र
भवे॰ गुदं॰ स्वप्रकाशाय॰ ऊरू॰ स्वयंज्योतिषे॰ जानुनी॰ चतुर्व्यूहाय॰ गुल्फौ॰ जनाधिपाय॰ पादौ॰ परब्रह्मणे॰ सर्वांगं॰ ॥

विशेषोपहारादिसमर्प्यरात्रिंनिनयेत् ॥ प्रातःसतिलैर्यवैः अग्नेनयसूपथेतिऋचाष्टत्यादशांशतर्पणंकृत्वानर्पणदशांशेन
होमंकुर्यात् ॥ तद्यथा ॥अग्निंप्रतिष्ठाप्यान्वादध्यात् ॥ प्रधानं देवं लक्ष्मीसहितंविष्णुं घृतान्वितपायसपलाशसमिद्-
तद्व्यैः सहस्रसंख्याकाहुतिभिः तथा ब्रह्मशंभूअष्टाविंशतितिलाहुतिभिः मंडलदेवताश्चैकैकयाज्याहुत्यायक्ष्ये ॥ ॥
अत्रक्रमः ॥ ॥अग्नेनयऋचापायसं इदंविष्णुरितिमंत्रेणपलाशसमिधः विष्णुगायत्र्याघृतंचजुहुयात् ॥ ततःपीठस्थं-
देवंसंपूज्यगोघृतालोडितसहस्रवर्त्तिभिः आरार्त्तिक्यंकृत्वा ततआचार्यंसंपूज्यपीठंघृतपूरितत्रिंशत्पलपरिमितंकां-
स्यपात्रंयथाशक्तिवातथासुवर्णवर्त्तिसंयुक्तरौप्यप्रणीतांचदद्यात् ॥ तत्रमंत्रः ॥रौप्यपात्रस्थितंदीपंहैमीवर्त्तिसम
न्वितं ॥ कांस्यपात्रेणसहितंददामिव्रतपूर्त्तये ॥ ततोगांचदत्वादशाधिकान्द्विजान्सदन्नेनसंतर्पयेत् ॥ एवमेवमाणि-
क्यलक्षवर्तीव्रतं ॥ ॥पूर्वोक्तेनविधानेनकुर्यात्सर्वमृतंद्रितइति ॥इत्येकसूत्रवर्त्तिमाणिक्यलक्षवर्तिव्रतं ॥ ॥अथरु-
द्रलक्षवर्त्तीव्रतं ॥ ॥स्कांदे ॥ ॥तिथ्यादिसंकीर्त्यममाखिलदुरितनाशाभीष्टसिद्धिपूर्वकशिवलोकप्राप्तिद्वारासां

बसदाशिवप्रीत्यर्थं आचरितरुद्रलक्षवर्तीव्रतस्योद्यापनंकरिष्येइतिसंकल्प्य॥ वृताचार्यः ॥लिंगतोभद्रेताम्रकलशोपरि
हैमंसांबंरुद्रं कद्रुद्रायेतिमंत्रेणप्रतिष्ठाप्य पुरतोवृषभंचसंपूज्य पुराणपठनादिनारात्रिंनिनयेत्॥ प्रातरग्निंप्रतिष्ठाप्यान्वाद
ध्यात् ॥प्रधानंदेवं सांबं रुद्रं रुद्रसूक्तेन ॐनमःशिवायेतिमंत्रेणवाघृतपायसबिल्वद्रव्यैः सहस्राहुतिभिः मंडलदेवताश्चै-
कैकयाज्याहुत्यायक्ष्ये॥ ततःपीठंगांदीपंचदत्वाएकादशाधिकान्द्विजान्भोजयेदिति अत्रवर्तीदशांशतस्तर्पणंतद्दशांश
तोहवनंतद्दशांशतोद्विजभोजनंप्रतिपदोक्तंनास्ति होमदशांशतःसाधारणंतर्पणंकांस्यपात्रसहितंदीपदानंचपूर्ववत्कर्त्तव्यं
एवमेवस्कंदभविष्ययोर्बिल्वलक्षवर्त्तीव्रतोद्यापनमुक्तं रुद्रलक्षवर्तिवत्सर्वमनुष्ठानंज्ञेयं॥ ॥इतिरुद्रबिल्वलक्षवर्ती
व्रतोद्यापनं॥ ॥अथकर्पूरलक्षदीपदानमुक्तं शैवागमे तिथ्यादिसंकीर्त्यममाखिलपापक्षयपूर्वकशिवलोककाम
नयाऽचरितलक्षकर्पूरदीपसांगतासिद्ध्यर्थंतदुद्यापनंकरिष्यइतिसंकल्प्य वृताचार्यः सर्वतोभद्रस्थकलशेसांबभवंनमोभ
वायचरुद्रायचेतिमंत्रेणसंस्थाप्यपूजयेत् प्रातरग्निंप्रतिष्ठाप्यान्वादध्यात् अत्रप्रधानं भवंसहस्रतिलाहुतिभि

मंडलदेवताश्चैकैकयाज्याहुत्यायक्ष्ये॥ ततःपीठंगांचदत्वाद्विजान् भोजयेत्॥ होममंत्रःस्थापनोक्तः॥ इतिकर्पूरलक्षदीपवि-
धानं ॥अथलक्षदीपविधानं॥ विष्णुधर्मोत्तरे ॥पंचायतनदेवतानामाराध्यस्यैववाग्रतः॥ चातुर्मास्येतुसंप्राप्तेशुभेवामा
सिभूमिप॥ प्रत्येकंचैकदीपंचदीपितंगोघृतेनच॥ तिलतैलेनवाकुर्यात्कर्पूरेणसमन्वितं॥ दीपंप्रज्वाल्यविधिवद्वर्त्याकार्पास-
संभुवा॥ एकसूत्र्यात्रिवर्त्यावाबिल्वाख्यामाणिकान्विता॥ एवंप्रकारेणलक्षदीपदानं॥ देवाग्रेकृत्वा कार्त्तिकपूर्णिमायामु
द्यापनंकुर्यात् तद्यथा तिथ्यादिसंकीर्त्यात्मनोविविधपापक्षयपूर्वकाभीष्टकामसिद्धिद्वाराश्रीपरमेश्वरप्रीत्यर्थमाचरित
लक्षदीपदानसांगतासिद्ध्यर्थंतदुद्यापनंकरिष्ये॥ वृताचार्यःसर्वतोभद्रस्थकलशेहैमंदेवंतन्मंत्रेणसंस्थाप्यसंपूज्यरात्रौ
जागरणंकृत्वा प्रातरग्निंप्रतिष्ठाप्यान्वादध्यात् अत्रप्रधानं पूज्यदेवंघृताक्ततिलद्रव्येणसहस्राहुतिभिर्मंडलदे
वताश्चैकैकयाज्याहुत्यायक्ष्ये॥ ततःपीठंस्वर्णवर्त्तिसंयुक्तरौप्यस्थदीपंघृतपूरितकांस्यपात्रसहितंब्राह्मणा
यदत्वागांचप्रतिपाद्यद्विजान् भोजयेत्॥ ॥इतिश्रीमच्छ्रित्तपावन॰ व्रतोद्यापनकौमुद्यांचतुर्विधलक्षवर्त्ती-

व्रतोद्यापनं कर्पूरलक्षदीपविधानं पृथक्पृथग्लक्षदीपविधानंच समाप्तं ॥ ॥अथ पार्थिवलिंगोद्यापनं ॥ ॥लैंगे ॥
रुद्रयामले भविष्ये शैवागमेचोक्तं तत्रविधिः सहस्रंवायलक्षंवा कोटिंवाथविधानतः॥ लिंगानां पूजयित्वातु सर्वान्कामा
नवाप्नुयात् ॥ मल्लिंगंपार्थिवंश्लक्ष्णं भुक्तिमुक्तिकरंपरं ॥ त्रिसंध्यंयोर्चयेल्लिंगंकृत्वाबिल्वेनपार्थिव ॥ एकंदशशतंवापिस
र्वाभीष्टमवाप्नुयात् ॥ शुद्धप्रदेशसंभूतां मृदमाहृत्ययत्नतः॥ शुद्धेनवारिणाभ्युक्ष्यसम्यक्संघट्यतुतत्पुनः॥ लिंगानांसंख्यया
कुर्यात्पृथग्पिंडान्यथाक्रमं ॥ पलद्वयान्नकर्त्तव्यंन्यूनंलिंगंसदैवहि ॥ अखंडंतुचरंलिंगंद्विखंडंस्थावरंस्मृतं॥ लिंगमादौ
विधायाथपिंडिकांरचयेत्ततः॥ पक्वजंबूफलाकारंलिंगंकुर्यान्मनोरमं ॥ वर्त्तुलंचतुरस्रंवासमंपीठद्वयंशुभं ॥ दर्शनादे
वलिंगस्यदेवगंधर्वदानवाः॥ तत्क्षणंपूजयंत्याशुरन्वितंनैवसंशयः॥ साक्षात्तंस्थापयेत्तस्मान्निर्माणक्षणएवतत् ॥
पूजास्थानं स्कांदे पाषाणदारुजेदेशेदर्भांतरितसंस्थले॥ पुष्पप्रकरसंकीर्णेपाणौवावेदिकाभुवि॥ सबिल्वताम्र-
पात्रेवास्थापयेत्पार्थिवंशिवं॥ मृल्लिप्तहस्तएवाशुसंक्षालितकरेथवा॥ पंचाष्टषोडशप्रोक्ताद्वात्रिंशदुपचारकाः॥ यस्तुपू-

जयते भक्त्या लिंगं त्रिभुवनेश्वरं ॥ सस्वर्गराज्यमोक्षाणां क्षिप्रं भवति भाजनं ॥ आदौ कृत्वा गणेशं च लिंगं कुर्यात्ततः परं ॥ प
श्चाच्छक्तिं ततः स्कंदं ततो लिंगान्यथाविधि ॥ हरो महेश्वरः शंभुः शूलपाणिः पिनाकधृक् ॥ शिवः पशुपतिश्चैव महादेव इ
ति क्रमात् ॥ मृदानयनसंघट्टप्रतिष्ठाह्वानमेव च ॥ स्नपनं पूजनं चैव क्षमस्वेति विसर्जनं ॥ ॥ अथ कामनापरत्वेनैकादशप्र
काराः ॥ ॥ तदुक्तं पार्थिवचिंतामणौ ॥ ऋणमोचनकामः एकशतदिनपर्यंतं प्रत्यहमेकलिंगं कृत्वा बृहती पुष्पं घृतं नै-
वेद्यं अनृणा अस्मिन्निति ऋचं अष्टोत्तरशतं जपेत् ऋणान्मुक्तो भवति ॥ १ ॥ पुत्रकामस्तु द्विशतपर्यंतं प्रत्यहं लिंग
द्वयं पंचामृताभिषेकः मल्लिकापुष्पं गुडोदनं नैवेद्यं कांडात्कांडात्प्ररोहंती इति अष्टोत्तरशतजपः याशतेन प्रतनोषीत्यने
नाष्टोत्तरशतदूर्वार्पणं पुत्रो भवति ॥ २ ॥ कन्याकामस्तु त्रिशतदिनं प्रत्यहं लिंगत्रयं करवीरपुष्पं शर्करा नैवेद्यं पा-
वीरवी कन्येति मंत्रेणाष्टोत्तरशतं जपेत् याशतेनेत्यष्टोत्तरशतदूर्वार्पणं कन्या भवति ॥ ३ ॥ द्रव्यकामस्तु चतुःशत
दिनपर्यंतं प्रत्यहं चत्वारि लिंगानि कृत्वा किंशुकपुष्पं कदलीफलं नैवेद्यं श्रीसूक्तं दशवारं प्रत्यहं पठेत् द्रव्यागमो

भवति ॥ ४॥ विवाहकामः प्रत्यहं पंचलिंगानि पंचशतदिनपर्यंतं कृत्वा चंपकपुष्पं पायसं नैवेद्यं गौरीर्मिमायेति ऋचं अष्टोत्तरशतं जपेत् ॥ ५॥ कलहनिवृत्तिकामः त्रिंशद्दिनपर्यंतं प्रत्यहं षड्लिंगानि बकुलपुष्पं मधु नैवेद्यं मुंचामि त्वेति सूक्तं दशधा जपेत् ॥ ६॥ तीर्थयात्राकामः पंचाशद्दिनपर्यंतं प्रत्यहं सप्तलिंगानि शतपत्रपुष्पं दध्योदनं नैवेद्यं रुद्रैकादशिनी जपः ७॥ विद्याकामः त्रिंशद्दिनपर्यंतं प्रत्यहमष्टौ लिंगानि बिल्वपत्रं लड्डुकनैवेद्यं यश्छंदसामृषभो विश्वरूप इत्यनुवाकं दशधा जपेत् ॥ ८॥ अपमृत्युहरणकामः एकशतदिनपर्यंतं प्रत्यहं नवलिंगानि धत्तूरपुष्पं दध्योदनं नैवेद्यं त्र्यंबकमिति मंत्रं आद्यंत प्रणवं अष्टोत्तरसहस्रं जपेत् ॥ ९॥ दूरगतसुहृदागमनकामः वर्षमेकं प्रत्यहं दशलिंगानि कांचनोद्भवंपुष्पं अपूपं नैवेद्यं योरुद्रोअग्नाविति अष्टोत्तरशतं जपेत् ॥ १०॥ सर्वदारिद्रनिवृत्तिकामः षण्मासं प्रत्यहमेकादशलिंगानि रक्ताब्जद्रोणपुष्पं सर्वान्नं नैवेद्यं गोधृताक्तं नमोहिरण्यबाहव इति मंत्रमष्टोत्तरशतं जपेत् ॥ ११॥ इत्येकादशप्रकाराः ॥ कारागृहमोचने विशेषः ॥ कारागृहमोक्षकाम एकविंशतिदिनपर्यंतं एकोत्तर वारवृत्त्या लिंगानि कृत्वा द्वाविंशतिदिनमारभ्य

पुनरेकैकद्भासेनलिंगानिकुलायावल्लिंगानिभवंति तावत्प्रत्यहंरुद्रैकादशिन्याभिषेकः पलाशपुष्पं दधिघृतमधुमि-
श्रान्नंनैवेद्यं अष्टसहस्रंत्वरितरुद्रंजपेत् निगडान्मुक्तोभवति लिंगसंख्ययाफलभेदमाह एकंपापहरंलिंगंद्विलिं
गंश्रीकरंत्रिलिंगंसर्वकामदं विद्याकामेसहस्रं स्त्रीकामेपंचशतं पुत्रकामेपंचदशायुतानि कन्याकामेयुतत्रयं भू
कामेसहस्रं रूपकामेत्रिसहस्रं राज्यकामेलक्षं मारणेसप्तसहस्रं उच्चाटनेपंचसहस्रं स्तंभनेत्रिसहस्रं जारणेद्वि
सहस्रं कारागृहमोचनेऽयुतं निगडमोचनेसार्द्धमयुतं डाकिन्यादिभयेपंचशतं राज्यभयेअयुतं दारिद्र्यमोचनेपंच
सहस्रं सर्वकामेसप्तायुतानि मोक्षकामेलक्षं परमसायुज्यकामेकोटिः सौवर्णलिंगंसौभाग्यकरं राजतंयशस्करं
ताम्रमयंपुष्टिकरं पित्तलमयंपुष्टिकरं कांस्यमयंकीर्त्तिकरं लोहमयंशत्रुमारणकरं सीसमयमायुःकरं पाषाणम
यंपुण्यकरं काश्मीरंश्रीकरं मारकतंशांतिकरं स्फाटिकंबहुस्वामित्वकरं इंद्रनीलमयंपोषणकरं मुक्तामयंश्रेयस्क
रं पारदंसर्वसिद्धिकरं चंदनजंज्वरनाशकरं कर्पूरजंशांतिकरं गोमयजंसर्वरोगहरं भस्मोद्भवंमोक्षकरं हारिद्रंप्री

तिवर्धनं कस्तूरीभवंस्रग्गंधकरं नवनीतजंकीर्त्तिकरं दधिजंलक्ष्मीकरं दुग्धजंसुखकरं शर्करोत्थंपुत्रकरं लवणोत्थंस
र्वलोकवशंकरं कृष्णातिलोद्भवंशिवलोकप्रदं उक्तेष्वेतेषुलिंगेषुपार्थिवंक्षिप्रसिद्धिदं कृतेमणिमयंलिंगंत्रेतायांहेमसंभ
वं द्वापरेपारदंश्रेष्ठंपार्थिवंतुकलौयुगइति॥ ॥अथारंभकालः॥ ॥शैवागमे॥ कार्त्तिकेमार्गशीर्षेवामाघेवैशाखस
ज्ञिते श्रावणेबहुलेपक्षेव्रतस्याचरणंभवेत् स्थलविशेषमाह पुण्यारण्येनदीतीरेपर्वताग्रेशिवालये॥ श्रीवृक्षाश्वत्थतुल
सीधात्रीछायायुतेवने॥ गोष्ठेगृहेवादेवाग्निसूर्यगोविप्रसन्निधौ॥ शिवपूजाविधातव्यापूर्वेपूर्वेमहाफलं॥ समापनकालमा
ह कार्त्तिकादिशुभेमासेलिंगानांचसमापनं॥ चतुर्दशीदर्शयुक्ता अष्टमीनवमीयुता॥ समाप्तिस्तत्रकर्त्तव्यारौद्रयुक्तेपुनर्व-
सौ॥ अन्येष्वपिचकालेषुशुभेषुचसमापनं॥ ॥अथोद्यापनं॥ ॥तिथ्यादिसंकीर्त्यामुककामनामुद्दिश्यकृतानांपा
र्थिवलिंगानांसंपूर्णफलावाप्तयेतदुद्यापनंकरिष्यइतिसंकल्प्य पुण्याहवाचनादिविधाय वृताचार्यः सर्षपादिनाभू-
तान्युत्सार्यद्वारपूजांकुर्यात् चतुर्द्वारोपशोभितमंडपस्येशानभागेस्थित्वा सदाशिवमंडपायनमः प्राग्द्वारपार्श्व-

योः नंदिनेनमः महाकालाय॰ चिच्छक्त्यै॰मायाशक्त्यै॰ द्वारश्रियै॰ वास्तुपुरुषाय॰ दक्षिणपार्श्वयोः गणेशाय॰
वृषभाय॰ चिच्छक्त्यादिपूर्ववत् पश्चिमद्वारपार्श्वयोः भृंगिणे॰ स्कंदाय॰ शक्त्यादिपूर्ववत् उत्तरद्वारपार्श्वयोः रटिने
॰चंडीश्वराय॰ शक्त्यादिपूर्ववत् ततः पश्चिमद्वारेणप्रविश्यवेदीपश्चिमतः उपविश्य लिंगतोभद्रेब्रह्मादिदेवतास्थाप-
नपूर्वकंकलशंप्रतिष्ठाप्यतदुपरिदेवंस्थापयेत् तत्रादौन्यासंकुर्यात् ललाटे शिवायनमः कंठेरुद्रायन॰ नाभौईशा-
नाय॰ जान्वोः शंकराय॰ पादयोः सदाशिवाय॰ ततः अश्मन्नूर्जमित्यनुवाकेनपयोधारयालिंगस्याग्न्युत्तारणंकुर्यात् ॥
लिंगप्रमाणंतु प्रत्यहंयावन्मानंमृल्लिंगंक्रियतेतावन्मानंतदर्धंतदर्धंवासौवर्णंराजतंवाकुर्यात् ततः प्राणप्रतिष्ठांकुर्यात्
पंचामृताभिषेकंचकृत्वा ततः कलशेनमः शंभवेचमयोभवेच नमः शंकरायचमयस्करायचेतिमंत्रेणपंचाक्षरेणवालिंगंसं-
स्थाप्य तद्वामभागे गौरीर्मिमायेति ॐ नमोभगवत्यै उमादेव्यै शिवप्रियायै नमइत्यागममंत्रेणवाहैमींगौरींप्रतिष्ठाप्यदक्षि
णभागेतत्पुरुषायविद्महेवक्रतुंडायधीमहि तन्नोदंतिः प्रचोदयादितिहैमंगणेशं तद्दक्षिणेतत्पुरुषायविद्महेमहासेनाय

धीमहि तन्नः षण्मुखः प्रचोदयादितिहैमंस्कंदं पुरतोराजतंवृषभं ऋषभंमेतिमंत्रेणसंस्थाप्यपरितोलोकेशान्प्रतिष्ठाप्यपूजये
त् ध्यानं मंगलायतनंदेवंभवकांतंमनोरमं॥ध्यायेत्कल्पतरोर्मूलेसमासीनंसहोमया॥सहस्राणिसहस्रशइतिध्यात्वा
ॐनमोभगवतेरुद्रायेतिलिंगोपरिअक्षतानुक्षिपेत् नमस्ताराायेत्यासनं नमः शंभवइतिपाद्यं नमः शंकरायेत्यर्घ्यं नमः
शिवायेत्याचमनीयं नमस्तीर्थ्यायेतिरुद्रसूक्तेश्वस्नानं भवंदेवंतर्पयामि शर्वं॰ रुद्रं॰ पशुपतिं॰ उग्रं॰ महांतं॰ भीमं॰ ईशा
नं॰ मानस्तोकेतिवस्त्रं नमोहिरण्यबाहवइत्युपवीतं नमोवृद्धायेतिभूषणं नमःश्वभ्यइतिगंधं॰नमः सोमायेत्यक्षताः नमः
पार्यायचेतिपुष्पं नमः कपर्दिनेचेतिधूपं नमआशवेचेतिदीपं नमोबभ्लुशायचेतिनैवेद्यं नमः पर्ण्यायचेतितांबूलं नमोदुं
दुभ्यायचेतिदक्षिणां नमइरिण्यायचेत्यारार्त्तिक्यं ततोलिंगोपरिनमः शर्वायचपशुपतयेचेत्यारभ्यनमोवृहतेचवर्षीयसे-
चेत्यंतेनपुष्पांजलिः एषतेरुद्रइतिप्रदक्षिणा नमोरुद्रेभ्यइतिनमस्कारः ततस्तोत्रंपठेत् नमओंकाररूपायनमोक्षरवपु
र्धृते॥नमोनादात्मनेतुभ्यंनमोबिंदुकलात्मने॥अलिंगलिंगरूपायरूपातीतायतेनमः॥ त्वंमातासर्वलोकानांत्वमेवजगतः

पिता॥ त्वंभ्राताल्वंसुहृन्मित्रंत्वंपितात्वंपितामहः॥ नमस्तेभगवन्रुद्रभास्करामिततेजसे॥ १॥ नमोभवायदेवायउमयासहिता
यच्च॥ सर्वायक्षितिरूपायसदासुरभिणेनमः॥ पशूनांपतयेचैवकामिनेमिततेजसे॥ भीमायव्योमरूपायशब्दरूपायतेनमः॥
महादेवायसोमायअमृतायनमोनमः॥ उग्राययजमानायनमस्तेकर्मयोगिने॥ इतिस्तुत्वाक्षमापयेत् ॐ अंगहीनंक्रियाहीनंवि
धिहीनंमहेश्वर॥ पूजितोसिमयादेवतत्क्षमस्वजगत्पते॥ इतिक्षमाप्यपुराणपठनादिनारात्रिंनिनयेत् रात्रौप्रारंभः तद्दिनेउ
पोषणं प्रातरग्निंप्रतिष्ठाप्यान्वादध्यात् अत्रप्रधानं सोमं शिवं कृतलिंगदशांशेनशतांशेनवापायसमधुशर्कराज्यति
लाक्षतबिल्वपत्रशतपत्रद्रव्याष्टकेनकेवलपायसेनवानमःशंभवेचेतिमंत्रेणपंचाक्षरेणवायक्ष्ये॥ तथागौरीगणेशांषण्मु
खंचउक्तद्रव्यैःप्रतिद्रव्यंदशदशाहुतिभिः वृषभंलोकेशान्ब्रह्मादिदेवताश्चदशदशतिलाहुतिभिः द्वारदेवताश्चैकैके-
कयाज्याहुत्यायक्ष्ये शेषेणस्विष्टकृतमित्यादिहोमंसमाप्यपूर्णाहुत्यादिकर्मशेषंसमापयेत् ततोहोमदशांशेनतर्पणं
तद्दशांशेनमार्जनंकृत्वाविशेषात्करेणपीठस्थंदेवंशिवंसंपूज्याचार्यायचसंपूज्यपीठंदद्यात् तत्रमंत्रः पीठंगृहाणभूदे

वशिवंशक्त्यादिसंयुतं॥ वांछितार्थंप्रयच्छाशुर्देहिमेव्रतजंफलमिति॥ ततोव्रतपूर्त्तयेगांचदत्वामार्जनदशांशंतोययथाश-
क्तिवासदन्नेनब्राह्मणान्संतर्प्यव्रतपूर्णतांवाचयित्वा॥शिषोगृहीत्वाइष्टजनैःसहभुंजीत अत्रत्रैवर्णिकानामेवाधि
कारः स्त्रीशूद्राणांतुपूजयैवोद्यापनंसिद्धिरितिलिंगात्॥ ॥इतिशैवागमोक्तपार्थिवलिंगोद्यापनं॥ ॥अथपार्थि
वगणेशोद्यापनं॥ ॥रुद्रयामले॥ महादेवउवाच ॥यथापार्थिवलिंगंतुसर्वसिद्धिविधायकं॥ यथाविघ्नेश्वरंदे-
वंपार्थिवंसर्वकामदं॥निर्विघ्नंजायतेकार्यंसर्वांसिद्धिंपुमान्लभेत्॥ षट्कर्माणितथाचक्षेशृणुष्वैकमनाभव॥रक्तो
पचारैःसिंदूरैरक्तमाल्यांबरैस्तथा॥जपापुष्पैःकारवीरैःकुसुमैःक्षीरपायसैः॥संपूज्यवश्यतामेतियंयंचिंतयतेनरः
॥शुक्लमाल्यैःशुक्लवस्त्रैरोदनैर्दधिमिश्रितैः॥मालतीकुसुमैर्धूपैर्दशांगैःशांतिलब्धये॥कवितायाःपटुत्वंचजायते-
नात्रसंशयः॥मोहनेमधुभिःस्नाप्यमधुपायसमर्पयेत्॥असितैःकुसुमैःपूज्योदमनेनासितागुरुं॥समारोप्यार्चयेद्भक्त्या
त्रैलोक्यंमोहयेत्क्षणात्॥स्तंभनेनिशयायुक्तैरुपचारैःसमर्चयेत्॥आढकीभक्तनैवेद्यैःश्वेतदूर्वाभिरेवच॥कारयेन्निंब

रसज्ञंधूपंशवोस्त्थतद्भवेत् ॥ मारणेमाहिषेचर्मण्यास्थायासितकंबलं ॥ धत्तूरैरर्चयेत्पुष्पैःसर्षपाक्षतमिश्रितैः ॥ नैवेद्यंगु
डसंमिश्रंमाहिषक्षीरसंयुतं ॥ भक्तंशाल्युद्भवंदेयंछागमांससमन्वितं ॥ अभिषेकस्तुतैलेनमहागणपतयेभवेत् ॥ धूपःश्म
शानजतरोःपुष्पैःसद्यःसमर्पयेत् ॥ एवंगणाधिपंकृत्वापूजयेत्पार्थिवंनरः ॥ यंयंकाममभिध्यायेत्तंतंसद्यःसमाप्नुयात् ॥
पार्थिवेविशेषः ॥ सहस्रंदशसाहस्रंलक्षंकोटिंतथैवच ॥ यःकरोतिगणेशानांपार्थिवानांनरोत्तमः ॥ सर्वसिद्धिमवाप्नोतिना
त्रकार्याविचारणा ॥ कारागृहेमोचनकामःएकविंशतिदिनपर्यंतमेकोत्तरवारवृद्ध्यापार्थिवगणेशान्कृत्वावक्ष्यमाणप्रका
रेणसंपूज्यपुनःद्वाविंशतिदिनमारभ्यैकैकह्रासेनप्रथमदिनपर्यंतंगणेशान्कृत्वायावद्गणेशाभवंतितावत्प्रत्यहंगणेशाय
वेशिरसाभिषेकःमूलमंत्रस्यापितावत्सहस्रजपः अभीष्टसिद्धिर्भवति एकविंशतिपुष्पाणि दाडिमीचजटामांसीबद
रीनागचंपकः ॥ बृहतीचतथापाचीभृंगराजस्तथैवच ॥ मालतीकुसुमैश्चैवतुलसीमाधवीतथा ॥ करवीरंदमनकंकमलं
कुमुदंतथा ॥ अतसीचतथाकुंदंदूर्वाश्वेताशमीतथा ॥ पारिजातंजपापुष्पंबंधूकंचैकविंशतिः ॥ पुष्पाभावेपत्रंग्राह्यं

अपूपंशर्करामिश्रंनैवेद्यंकदलीफलं॥ नालिकेरंचसिंदूरंदूर्वागुग्गुलधूपकः॥ इदंमत्यहंसाधारणं अथसर्वसाधारणपूजोच्यते
अभीष्टसिध्यर्थंपार्थिवगणपतिपूजांकरिष्ये॥ अश्वत्थमूलजांतुलसीमूलजांशुद्धस्थलजांवामृदमानीयपृथ्वित्वयाधृताइतिधरांप्रा
र्थयित्वा ॐगंगणपतयेनमः मृदाहरणं ॐगींगणपतयेनमः सेचनं ॐगूंहेरंबायनमःसंयोजनं ॐगैंधरणीधराय॰ ॐगौंक्षिप्रप्र-
सादनाय॰ चतुर्भुजां एकदंतांलंबोदरांमूर्त्तिंकृत्वा ॐगः सर्वसिद्धिप्रदायकाय॰ मस्तकोपरिरक्ताक्षतान्दत्वात्हृदिस्थंदेवंमानसोप
चारैः संपूज्यनासारंध्रेणांजलिस्थसाक्षतपुष्पैः संयोज्यदेवमस्तकेअक्षतपुष्पादिनिधायप्राणप्रतिष्ठांकुर्यात्॥ ततः स्ववामभा-
गेकलशंसंपूज्यदेवंध्यायेत्॥ तत्रादौस्वशरीरेदेवेन्वन्यासंकुर्यात्॥ ॐगांगींगूंगैंगौंगः षडंगंकृत्वामूलमंत्रेणषडंगंकुर्यात् तद्य
था अस्यश्रीगणपतिमंत्रस्यगणकऋषिः निचृद्गायत्रीछंदः गणपतिर्देवता गंबीजं ॐशक्तिः स्वाहाकीलकं न्यासादौवि-
नियोगः ॐनमोहेरंबमदनमोदितममसंकष्टान्निवारयनिवारयस्वाहा एवंषडंगन्यासंकृत्वाध्यायेत् रक्तोरक्तांगरागांशुककु-
सुमयुतस्तुंदिलश्चंद्रमौलिर्नेत्रैर्युक्तस्त्रिभिर्वामनकरचरणोबीजपूरांतनासः॥ हस्ताग्राक्लृप्तपाशांकुशरदवरदोनागवक्त्रोहि

मूषेदेवः पद्मासनेनोनोभवतुस्फुरनुत्तोभूतयेविघ्नराजः ॥ १ ॥ इतिध्यात्वामूलमंत्रेणनाममंत्रेणचपूजयेत् ॐ गणंजयायन
मः आवाहनं॰ गणपतये॰ आसनं॰ हेरंबाय॰ पाद्यं॰ धरणीधराय॰ अर्घ्यं॰ महागणपतये॰ मधुपर्कं॰ यक्षेश्वराय॰ आचम
नीयं॰ क्षिप्रप्रसादाय॰ मलापकर्षस्नानं॰ अमोघसिद्धये॰ पंचामृतस्नानं॰ अमृताय॰ शुद्धोदकस्नानं॰ रुद्रेणगाणपत्येनसूक्तेना
थर्वशिरसावामहाभिषेकः मंत्राय॰ वस्त्रं॰ चिंतामणये॰ उपवीतं॰ निधये॰ गंधं॰ सुमंगलाय॰ रक्ताक्षतान्॰ बीजाय॰ पुष्पं॰ आ-
शापूरकाय॰ सुगंधिद्रव्यं॰ वरदाय॰ दीपं॰ शिवाय॰ महानैवेद्यं॰ काश्यपाय॰ तांबूलं॰ नंदनाय॰ दक्षिणां॰ वाचासिद्धाय॰ फलं॰ ढुं
ढिविनायकाय॰ नीराजनं॰ सर्वसंकष्टनाशनाय॰ मंत्रपुष्पं॰ कुमारगुरवे॰ प्रदक्षिणां॰ अघनाशिने॰ नमस्कारं॰ एवंचतुर्विंशत्युप-
चारान्समर्प्यततोगणंजयादारभ्यढुंढिविनायकांतैः एकविंशतिनामभिः एकविंशतिश्वेतदूर्वांकुरान् अभावे अन्यान्समर्प्य
मूलमंत्रमष्टोत्तरशतंजप्त्वाविशेषार्घ्यंदत्वाक्षमापयेत् ॥ अंगहीनंक्रियाहीनंभक्तिहीनंगणाधिप ॥ पूजितोसियथादेवतन्क्ष
मस्वजगत्पते ॥ इतिशैवागमोक्तपूजाविधिः ॥ एवंप्रकारेणसहस्रमयुतंलक्षंकोटिंवापार्थिवान्कृत्वांतेमाघादिशुभका

लेउद्यापनंकुर्यात् तद्यथा तिथ्यादिसंकीर्त्यामुककामनयाकृतानांपार्थिवगणेशानांसंपूर्णफलावाप्तयेतदुद्यापनंकरि-
ष्यइतिसंकल्प्य वृताचार्यश्चतुर्द्वारोपशोभितमंडपांतर्वेदिकायांसर्वतोभद्रेब्रह्मादिदेवतास्थापनपूर्वकंकलशंप्रतिष्ठाप्यत
त्रदेवंस्थापयेत् तत्रादौपूर्वोक्तान्न्यासान्कृत्वा अश्मन्नूर्जमित्यनुवाकेनपयोधारयाप्रतिमायाअग्न्युत्तारणंकुर्यात् प्रति
माप्रमाणंतुप्रत्यहंयावन्मानंमृद्गणेशंक्रियतेतावन्मानेनतदर्धेनवासौवर्णराजतंवादेवंकुर्यात् ततःप्रतिष्ठांकृत्वामूलमंत्रेण
गणानांत्वेतिवाप्रतिष्ठाप्यावरणानिपूजयेत् पूर्वादिक्रमेण वक्रतुंडाय॰एकदंष्ट्राय॰ गजाननाय॰ महादेवाय॰ विकटाय॰
विघ्नराजाय॰ धूम्रवर्णाय॰ हेरंबाय॰ ततोबाह्येपूर्वादि॰ ब्राह्म्यै॰ माहेश्वर्यै॰ कौमार्यै॰ वैष्णव्यै॰ वाराह्यै॰ इंद्राण्यै॰ चामुंडायै॰
वैनायक्यै॰ ततोलोकेशानावाह्यपूर्वोक्तपूजाप्रकारेणपूजयेत् पुष्पोत्तरमंगपूजा गणनाथायनमः पादौपूजयामि गणेशा
य॰ जानुनी॰ गणंजयाय॰ ऊरू॰ गणक्रीडाय॰ कटी॰ वक्रतुंडाय॰ हृदयं॰ लंबोदराय॰ कंठं॰ गजाननाय॰ स्कंधौ॰ हेरंबाय॰
हस्तौ॰ विकटाय॰ आस्यं॰ विघ्नराजाय॰ नेत्रे॰ धूम्रवर्णाय॰ शिरः॰ सर्वसिद्धिप्रदायकाय॰ सर्वांगं॰ एवंसंपूज्यस्तोत्रैःस्तु

तापुराणपठनादिनारात्रिंनिनयेत्॥ प्रातरग्निंप्रतिष्ठाप्यान्वादध्यात् प्रधानं देवं महागणपतिंपायसतिलाज्यमोद
करक्ताक्षतपंचखाद्यशमीदूर्वाद्रव्याष्टकेनतिलपायसेनवाकृतगणेशदशांशेनवायक्ष्ये आवरणदेवतामंडलदेवता
श्चदशदशतिलाहुतिभिर्यक्ष्ये एवंहोमंसंपाद्यदेवंसंपूजयेत् होममंत्रास्तु आतूनइंद्रइति गणानांत्वेतिमूलमंत्रोवा
ततोहोमदशांशेनतर्पणं तद्दशांशेनमार्जनंकृत्वाततआचार्यंसंपूज्यपीठंनिवेद्यगांचदत्वाएकविंशतिब्राह्मणानूसं-
पूज्यपक्वान्नपरिपूरितकलशंवस्त्रयुग्मसहितंसदक्षिणंतेभ्यः प्रत्येकंपूर्वोक्तपुष्पांजलिस्थैकविंशतिनामभिर्दत्वा
मार्जनदशांशतोब्राह्मणभोजनसंकल्पंकृत्वाभूयसींदत्वासदन्नेनद्विजान्संतर्प्यव्रतपूर्णतांवाचयित्वाःशिषोगृही
त्वाइष्टजनैःसहभुंजीत अयमुद्यापनप्रकारोरुद्रयामलोक्तः इतिश्रीमच्चित्तपावन॰ व्रतोद्यापनकौमुद्यांपार्थि
वलिंगगणेशोद्यापनंसमाप्तं॥ ॥अथतुलसीविवाहविधिः॥ ॥विष्णुयामले॥ ॥आदावेवाथतुलसींवने
वास्वगृहेपिवा॥ मासमात्रेणसंवर्ध्यततोयजनमारभेत्॥ सौम्यायनेप्रकर्त्तव्यंगुरुशुक्रोदयेतथा॥ अथवाकार्त्तिके

मासिभीष्मपंचदिनेऽथवा॥ वैवाहिकेषुऋक्षेषुपूर्णिमायांविशेषतः॥ मंडपंकारयेत्तत्रकुंडवेदीविवाहवत्॥ ब्राह्मणंदेशि
कंचैवचतुरश्चतथर्त्विजः॥ ग्रहयज्ञंपुरस्कृत्यमातृणांयजनंतथा॥ कृत्वानांदीमुखश्राद्धंसौवर्णंस्थापयेद्धरिं॥ कृत्वातुरौ
प्यतुलसीलग्नेत्वस्तमितेरवौ॥ गोधूलिकलग्नेइत्यर्थः संपूज्यालंकृतांतांचप्रदद्याद्विधितोहरेः॥ हरयेइत्यर्थः समभ्यु
तेनमंत्रेणवस्त्रयुग्मेनवेष्टयेत्॥ यदाबध्नेतिमंत्रेणकंकणंपाणिपल्लवे॥ आजन्मदद्यादितिमंत्रेणकरग्रहोविधीयते॥ कर्तव्य
श्चततोहोमोविशेषाद्विधिपूर्वकं॥ आचार्योवेदिकाकुंडेजुहुयाच्चनवाहुतीः॥ ॐनमोभगवतेवासुदेवायस्वाहा॥ ॐ
नमोनारायणायस्वाहेतिवा॥ यजमानःसपत्नीकःसहामात्यैश्चगोत्रजैः॥ प्रदक्षिणाःप्रकुर्वीतचतस्रोविष्णुनासह॥ वि
ष्णुसहिततुलस्याइत्यर्थः पठेयुःशांतिकाध्यायान्तथावैष्णवसंस्कृतान्॥ गायंतुमंगलंनार्योभेरीतूर्यादिनिःस्वनैः॥ गां
पीठंचतथाशय्यामाचार्यायनिवेदयेत्॥ ऋत्विग्भ्योदक्षिणांदद्यात्सदन्नैर्भोजयेद्द्विजान्॥ एवंप्रतिष्ठितांदेवींविष्णवे
यःसमर्पयेत्॥ आजन्मोपार्जितात्पापान्मुच्यतेनात्रसंशयः॥ ॥अथप्रयोगः॥ ॥तिथ्यादिसंकीर्त्यममाखिल

विविधपातकशमनपूर्वकाभीष्टसिद्धिद्वाराश्रीमहाविष्णुप्रीत्यर्थंतुलसीविवाहंकरिष्ये इतिसंकल्प्य ॥ तदंगस्वस्तिवाचनादि
ग्रहयज्ञंचकृत्वाएवमाचार्यमृत्विजोवृत्वातुलस्याआलवालंपरितोमंडपंचकृत्वाविवाहवत्तत्रतुलसीपुरतोवेदींकृत्वातुलस्या
हरिद्रारोपणादिकृत्वावेद्यांसर्वतोभद्रेहैमंविष्णुंइदंविष्णुरितिमंत्रेण ॥ रौप्यमयींतुलसींच ॥ तुलसिश्रीसखिशुभेपापहारि
णिपुण्यदे ॥ नमस्तेनारदनुतेनारायणमनःप्रिये ॥ इतिसंस्थाप्यसंपूज्यवस्त्रभूषणादिनाभूषयित्वागोधूललग्नेमध्येअंतःप
टंधृत्वाविवाहवत्सर्वमंगलाष्टकानिपठित्वांतःपटंनिःसार्य ॐ पुण्येत्युक्त्वासंकल्पपूर्वकांसालंकारांवस्त्रयुग्मवेष्टितांतुलसीं
हरयेप्रतिपाद्य यदाबध्नेतिमंत्रेणोभयोः कंकणंबध्वा आजददादितिमंत्रेणकरग्रहंकृत्वा आचार्योवेदिकायांपाकयज्ञविधा
नेन अग्निंप्रतिष्ठाप्यतुलसीविवाहहोमेदेवतापरिग्रहार्थमन्वाधानंकरिष्ये इतिसंकल्प्य अत्रप्रधानं विष्णुंत्रयोदशाक्षरमं
त्रेणाष्टादशाक्षरेणवानवाज्याहुतीर्यक्ष्ये शेषेणस्विष्टकृदादि ततोयजमानश्चतस्त्रःप्रदक्षिणाःकृत्वाशांतिपाठादिपठित्वा=
तूर्यादिघोषपूर्वकंयथाविभवंविष्णुंतुलसींचसंपूज्यपीठंगांचाचार्यायऋत्विग्भ्योदक्षिणांचदत्वाब्राह्मणान्भोजयेदिति ॥

अथतुलसीपूजनंविष्णुधर्मोक्तंविलिख्यते तुलसींमंगणेवेदिकायांरोपयित्वापूजयेत् अभीष्टसिध्यर्थंतुलसीपूजांकरिष्ये
ततःकलशंसंपूज्यध्यायेत् ध्यायामितुलसींदेवींश्यामांकमललोचनां॥प्रसन्नांपद्मकल्हारवराभयचतुर्भुजां॥किरीटहा
रकेयूरकुंडलादिविभूषितां॥धवलांशुकसंयुक्तांपद्मासननिषेदुषीं॥ध्यानं भगवत्यैतुलस्यैनमः आवाहनं॰विष्णुवल्लभा-
यै॰आसनं॰सर्वदेवमयायै॰पाद्यं॰सर्वतीर्थमयायै॰अर्घ्यं॰दैत्यांतकप्रियायै॰आचमनीयं॰सर्वलोकहितायै॰स्नानं॰लक्ष्मी
सहोदरायै॰वस्त्रं॰महादेव्यै॰गंधं॰रमावासायै॰पुष्पं॰अभीष्टदायै॰धूपं॰पापहारिण्यै॰दीपं॰भगवत्यै॰नैवेद्यं॰अमृतसंभूता
यै॰तांबूलं॰अमृतरूपिण्यै॰दक्षिणां॰जगद्धात्र्यै॰नीराजनं॰सुदक्षिणायै॰प्रदक्षिणां॰परमेश्वर्यै॰नमस्कारं॰अभीष्टदायै॰प्रा
र्थनां॰ततःतुलसीमंत्रमष्टोत्तरशतंयथाशक्तिवाजपेत्॥तुलसिश्रीसखिशुभेपापहारिणिपुण्यदे॥नमस्तेनारदनुतेनारायण
मनःप्रिये॥ततःस्कंदोक्तंतुलसीकवचंपठेत्॥अस्यश्रीतुलसीकवचस्यविष्णुर्ऋषिःअनुष्टुप्छंदः तुलसीदेवता अभीष्ट-
सिध्यर्थेजपेविनियोगः तुलसीमेशिरःपातुभालंपंकजधारिणी॥दृशौमेपद्मनयनाश्रीसखीश्रवणेमम॥घ्राणंसुगंधामेपा

तुम्बुरुवंच सूक्ष्मुखीमम ॥ जिह्वांमेपातुशुभदा कंठंविद्यामयीमम ॥ स्कंधौकल्हारिणीपातु भुजौमेपापहारिणी ॥ करौपद्मक
रापातुहृदयंविष्णुवल्लभा ॥ पुण्यदामध्यमंपातुनाभिंसौभाग्यदायिनी ॥ कटिंकुंडलिनीपातुऊरूनारदवंदिता ॥ जननीजा
नुनीपातुजंघेसकलवंदिता ॥ नारायणप्रियापातुसर्वांगंसर्वरक्षका ॥ संकटेविषमेदुर्गेभयेवादेमहाहवे ॥ निश्यन्हिसंध्ययोः
पातुतुलसीसर्वतःसदा ॥ इतीदंपरमंगुह्यंतुलस्याःकवचंमुदा ॥ तुलसीकाननेतिष्ठन्नासीनोवाजपेदिदं ॥ सर्वान्कामानवाप्नो
तिविष्णुसायुज्यमृच्छति इतितुलसीकवचं ॥ अथधात्रीव्रतं ॥ विष्णुधर्मोत्तरे तत्रविधिः आश्विनपौर्णमासीमारभ्य
कार्त्तिकपौर्णिमापर्यंतंकर्त्तव्यं अशक्तावंतिमदिनत्रयंपौर्णिमायांवाकार्यं तिथ्यादिसंकीर्त्यममाखिलपापक्षयपूर्वकन्चतुर्वि
धपुरुषार्थसिद्धिद्वारावाश्रीपरमेश्वरप्रीत्यर्थंधात्रीमूलेविष्णुपूजांधात्रीपूजांचकरिष्येइतिसंकल्प्य धात्र्याःआलवालंकृ-
त्वातन्मूलेपंचरंगोपेतांवेदिकांकृत्वा तत्रविष्णुंसंस्थाप्यपूजयेत् शांताकारंभुजगशयनमितिध्यात्वापुरुषसूक्तेनपूजयेत्
धूपात्प्रागंगपूजा दामोदरायनमः पादौपूजयामि केशवाय० कटीं० नारायणाय० उदरं० वामनाय० कंठं० श्रीधराय० बाहू०

गोविंदाय॰ मुखं॰ सहस्राक्षाय॰ नेत्रे॰ सर्वेश्वराय॰ ललाटं॰ विष्णवे॰ शिरः॰ त्रिविक्रमाय॰ सर्वांगं॰ नमस्कारानंतरं विशेषा
र्घ्यं पुष्पश्रीफलसंयुक्तं दद्यात् तत्रमंत्रः नमःसहस्रशीर्षाय सहस्राक्षायतेनमः॥ नमस्तेसहस्रपदे पुरुषायनमोस्तुते॥ स
हस्रनाम्ने देवेश प्रसीदत्वंममाच्युत॥ अर्घ्यं गृहाण भगवन्सर्वकामप्रदोभव॥ ततः प्रार्थयेत् भगवन्देवदेवेश लोकनाथ-
जगत्पते॥ अक्षयासंततिर्मेस्तु दामोदरनमोस्तुते॥ ततो धात्र्यैनमइतिनाममंत्रेण षोडशोपचारैर्धात्रीं संपूज्य अथवा
षोडशनामभिः षोडशोपचारान्कल्पयेत्॥ शांत्यैनमः कांत्यै॰ मेधायै॰ प्रकृत्यै॰ विष्णुपत्न्यै॰ महालक्ष्म्यै॰ रमायै॰ कमला
यै॰ इंदिरायै॰ कल्याण्यै॰ कमनीयायै॰ सावित्र्यै॰ जगद्धात्र्यै॰ गायत्र्यै॰ धृत्यै॰ अव्यक्तायै॰ गंधोत्तरमंगपूजा विश्वरूपा
यैनमः पादौपूजयामि स्वरूपायै॰ कटिं॰ अब्धिसंभवायै॰ हृदयं॰ लोकमात्रे॰ मुखं॰ धात्र्यै॰ शिरः॰ एवंसंपूज्य ततोष्टदि
क्षु दीपान्बलिंधात्र्यैनमइतिदत्वा तथैवाष्टकृत्वः सूत्रेणवेष्टयित्वा ८ कृत्वः प्रदक्षिणाः नमस्कारांश्च कृत्वा प्रार्थयेत् धा
त्रिदेविनमस्तुभ्यं सर्वपापक्षयंकरि॥ वर्चस्वंकुरुमांदेवि धनवंतंतथाकुरु॥ पुत्रान्पौत्रान्बलंप्रज्ञां देहिमेजगदीश्वरि॥

संवत्सरकृतंपापंदूरीकुरुममाक्षये॥ ततोधात्रीमूलेसव्येनैवतर्पयेत्॥ पितापितामहश्चान्येअपुत्रायेचगोत्रिणः॥ वृक्षयोनिग
तायेचयेचकीटत्वमागताः॥ तिर्यग्योनिगतायेच येचब्रह्मांडमध्यगाः॥ पिशाचत्वंसमायेचयेचभेतत्वमागताः॥ तेपिबंतुमया
दत्तंधात्रीमूलेक्षयंपयः॥ तेसर्वेतृप्तिमायांतुधात्रीमूलेनिषेचनात्॥ एवंप्रत्यहंमासपर्यंतंकृत्वाअंतेउद्यापनविधिनामंड-
लेसौवर्णीधात्रीमूलेहैमंविष्णुपूर्ववत्संपूज्यघृताक्तनिलैरष्टोत्तरशतंपृथक्पृथक्तत्तन्मंत्राभ्यांहुत्वाऽचार्यायपीठंव्रतपूर्तयेगां
चदत्वासर्वसंपूर्णतासिद्धयेस्वर्णयुक्तघृतपूरितकांस्यपात्रंदद्यात्॥ तत्रमंत्रः कांस्यंब्रह्ममयंप्रोक्तमाज्यंभोज्यंदिवौकसां
स्वर्णमग्निदैवत्यमतःशांतिंप्रयच्छमे॥ ततोद्विजान्संभोज्यआशिषोगृहीत्वास्वयंभुंजीत॥ ॥इतिश्रीमच्छि॰ व्रतोद्यापन-
कौमुद्यांतुलसीविवाहविधानंधात्रीविधानंचसमाप्तं॥ अथध्वजारोपणं॥ बृहन्नारदीये यःकुर्याद्विष्णुभवनेध्व-
जारोपणमुत्तमम्॥ संपूज्यतेविरंच्याद्यैःकिमन्यैर्बहुभाषितं॥ सर्वपापहरंकर्मध्वजारोपणसंज्ञितं॥ महापातकयुक्तोपियुक्तो-
वासर्वपातकैः॥ ध्वजंविष्णुगृहेकृत्वासर्वपापैःप्रमुच्यते॥ यावद्दिनानिवसतिध्वजोविष्णुगृहेद्विजाः॥ तावद्युगसहस्राणिहरि

सारूप्यमश्नुते॥ स्वारोपितोध्वजोविष्णुगृहेधुन्वन्पटंस्वकं॥ कर्त्तुःसर्वाणिधुन्वंतिपापानिनिमिषार्धतइति॥ तत्रविधिः कार्त्ति
कासितदशम्यांनियमान्वितः एकादश्यासुपोषितःविष्णुस्मरणतत्परः॥ द्वादश्यांप्रातर्यथाविधिस्नात्वानित्यकर्मनिर्वर्त्यसंकल्पं
कुर्यात्॥ तिथ्यादिसंकीर्त्यअशेषपापौघक्षयसकलाभीष्टसिद्धिपूर्वकविष्णुसारूप्यकामोविष्णुद्वारेध्वजारोपणंकरिष्ये पुण्या
हवाचनादिकृत्वाआचार्यंचतुरःऋत्विजश्चवृत्वातैःसहदेवालयेविष्णुंपुरुषसूक्तेनसंपूज्य ततोत्युच्चध्वजस्तंभौगायत्र्याप्रोक्ष्य
ध्वजयुतौकृत्वा तत्रसूर्यंवैनतेयंहिमांशुंधातारंविधातारंचनाममंत्रैरावाह्यसंपूज्यच्चध्वजौहरिद्राक्षतगंधपुष्पादिभिर्भूषयित्वा
शुद्धभूमौस्थंडिलेअग्निंप्रतिष्ठाप्यअन्वादध्यात्॥ अत्रप्रधानं॥ विष्णुंअष्टोत्तरशतंपायसघृताहुतिभिः सूर्यंवैनतेयंहिमांशुंधा
तारंविधातारंचाष्टाष्टसंख्ययापायसाज्याहुतिभिःशेषेणस्विष्टकृतमित्यादिविष्णुहोममंत्राःषोडशर्चंपौरुषसूक्तंइरावतीइति
प्रतिद्रव्यमष्टादशभिर्मंत्रैःषोडशाहुत्याहोमयेत्॥ उदुत्यंजातवेदसमितिसूर्यस्य सामध्वनिशरीरस्त्वमितिगरुडस्य सोमा
धेनुमितिहिमांशोः धातुः धातादधातुनोरयिमीशानोजगतस्पतिः॥ सनःपूर्णेनवावनत्॥ विधातुः योनःपिताजनितायोविधा

तायोनःसनोअभ्यासज्जजानइति ततःसौरमंत्रान् शांतिसूक्तानिचपठित्वाजागरणादिनारात्रिंनिनयेत्॥ प्रातर्देवंसंपूज्यत-
तःसूक्तपाठैःस्तोत्रपठनैर्नृत्यमंगलवाद्यघोषैःसहदेवंप्रदक्षिणीकृत्यदेवालयंध्वजावानीयदेवस्यद्वारदेशेशिरवरेवास्थिरोकृत्वा-
ध्रुवसूक्तंपठित्वातंसंपूज्यपुनर्देवालयेदेवंविशेषात्कारेणसंपूज्यइदंस्तोत्रंपठेत्॥ सूतउवाच ॥ नमस्तेपुंडरीकाक्षनम-
स्तेविश्वभावन॥ नमस्तेस्तुहृषीकेशमहापुरुषपूर्वज॥ यत्रेदमखिलंजातंयत्रसर्वंप्रतिष्ठितं॥ लयमेष्यतियत्रैतत्तंप्रपन्नोस्मिकेश
वं॥ नजानंतिपरंभावंयत्रब्रह्मादयःसुराः॥ योगिनोयंनपश्यंतितंवंदेईशरूपिणं॥ अंतरिक्षंतुयन्नाभिर्द्यौर्मूर्धायस्यचैवहि॥ पृ
थिवीयस्यपादोचतंवंदेविष्णुरूपिणं॥ यस्यश्रोत्रेदिशःसर्वायच्चक्षुर्दिनकृच्छशी॥ ऋक्सामयजुषोनेतितंवंदेब्रह्मरूपिणं॥
यन्मुखाद्ब्राह्मणाजातायद्बाहोरभवन्नृपाः॥ वैश्यायस्योरुतोजाताःपद्भ्यांशूद्रोअजायत॥ मायासंगस्यमात्रेणवदंतिपुरुषंतु
ये॥ स्वभावविमलंशुद्धंनिर्विकारंनिरंजनं॥ एकोविष्णुर्महद्भूतंपृथक्भूतान्यनेकशः॥ त्रीन्लोकान्व्याप्यभूतात्माभुंक्तेविश्वभुग-
व्ययः॥ योदेवःसर्वभूतानामंतरात्माजगन्मयः॥ निर्गुणःपरमानंदःसमेविष्णुःप्रसीदतु॥ चतुर्भिश्चचतुर्भिश्चद्वाभ्यांपंचभिरेवच

हूयतेचपुनर्द्वाभ्यांसमेविष्णुःप्र॰॥ परेशःपरमानंदःपरात्परतरःप्रभुः॥चिद्रूपश्चसविज्ञेयःसमेवि॰ ज्ञानिनांकर्मिणांचैवतथाभ
क्तिमतांनृणां॥गतिदाताविश्वगम्यःसमेविष्णुःप्र॰॥यइदंकीर्तयेन्नित्यंस्तोत्राणामुत्तमोत्तमं॥सर्वपापविनिर्मुक्तःपरंसायुज्यमा
प्नुयादिति॥ ततोद्वादशब्राह्मणान्संभोज्यदक्षिणादिनाप्रतोष्यआशिषोगृहीत्वाभुंजीत॥ एवमेवशिवादीनां तत्रगरुडस्थानेवृ
षभः अन्यत्समानं होमेपौरुषंत्र्यंबकंकद्रुद्रायेति इतिध्वजारोपणं॥ अथकार्तिकादिमासव्रतोद्यापनं॥ पाद्मे॥ आदौम
ध्येऽन्तेवापूर्णिमायांकार्यं॥तिथ्यादिसंकीर्त्यआत्मनःसकलपापनाशपूर्वकऐहिकामुष्मिकविविधसुखप्राप्तिद्वाराश्रीपरमेश्वरप्री
त्यर्थंकृतंयत्कार्तिकादिमासस्नानंतत्संपूर्णफलावाप्तयेतदुद्यापनंकरिष्यइतिसंकल्प्य वृताचार्यस्त्रिंशद्दंडप्रमाणेयथाशक्तिवा
कृतेमंडपेपंचरंगोपेतंमंडलेब्रह्मादिदेवतास्थापनपूर्वकंकलशंहैमंरौप्यंताम्रंवाषोडशपलमितंप्रतिष्ठाप्यतत्रपूर्णपात्रेऽष्टदले
कर्षमात्रंतदर्धंतदर्धंवाहैमंलक्ष्म्यायुतं दामोदरंइदंविष्णुरितिमंत्रेणप्रतिष्ठाप्यपुरतोगरुडंपरितोलोकेशानावाह्यपुरुषसूक्ते
नसंपूज्यस्तोत्रैःस्तुत्वाजागरादिनारात्रिंनिनयेत्॥प्रातरग्निंप्रतिष्ठाप्याऽन्वादध्यात्॥ अत्रप्रधानं लक्ष्म्यायुतंदामोदरंसा

ज्ययवमिश्रितनिलाश्वत्थसमिद्भि र्नपंचखाद्यद्रव्यचतुष्टयेनाष्टोत्तरसहस्राहुतिभिः परिवारदेवताः ब्रह्मादिदेवताश्चदश
दशतिलाहुतिभिर्यक्ष्ये॥ ततआचार्यायपीठंदद्यात्॥ तत्रमंत्रः॥ दामोदरसलक्ष्मीकस्सप्रतीकजनार्दन॥ त्वंमांमोचयपापाद्वैत
वमूर्तिप्रदानतः॥ अधिकफलावासयेसोपस्करांशय्यांगांचदत्वाततस्त्रिंशदेकंवापक्वान्नपूरितंकांस्यपात्रंसदक्षिणंदद्यात्
तत्रमंत्रः॥ कांस्यंविष्णुमयंप्रोक्तंपक्वान्नैःपरिपूरितं॥ ब्राह्मणायप्रदास्यामिकेशवःप्रीयतामिति॥ ततोब्राह्मणान्सदन्नेनसं
भोज्यदक्षिणांदत्वाशिषोगृहीत्वाबंधुजनैःसहभुंजीत॥ एवमेवमाघवैशाखयोः माघेतुमाधवोदेवोवैशाखेमधुसूदनः॥
॥ ॥इतिकार्तिकादिमासोद्यापनं॥ ॥अथत्रिपुरविधिःपाद्मे ॥ कार्तिकमासपर्यंतंप्रत्यहंदीपदानंकृत्वाअंतेपूर्णिमा
यांत्रिपुरंप्रज्वालयेत्॥ तत्रविधिः॥ पौर्णमास्यांसायंकालेदेवद्वारस्यत्रिपुरस्यतदभावेतुलस्यावायच्चान्यमृदावेदिकांनि
र्मायतत्रकंदर्पंपूजयेत्॥ तद्यथा॥ तिथ्यादिसंकीर्त्याभीष्टसिद्धिद्वाराश्रीपरमेश्वरप्रीत्यर्थंत्रिपुरप्रज्वलनंकरिष्यइतिसंकल्प्य
अक्षतपुंजेगणेशंशंभुंचसंपूज्यवेदिकायांअष्टदलेताम्रकलशेद्विभुजंहैमंकंदर्पनाममंत्रेणप्रतिष्ठाप्यपट्टकूलेनसंछाद्यपं

चामृतस्नपनपूर्वकंविष्णुमंत्रेणषोडशोपचारैः पूजयेत् ॥ ततआज्येनतिलतैलेनवात्रिपुरंपूजापुरःसरंप्रज्वालयेत् ॥ तत्रमंत्रः ॥
कीटाःपतंगामशकाश्चवृक्षाजलस्थलेयेविचरंतिजीवाः ॥ दृष्ट्वाप्रदीपंनचजन्मभागिनोभवंतिनित्यंश्वपचाहिविप्राः ॥ दीपमं-
त्रः ॥ आज्येनवर्तिसंयुक्तंत्रिपुरंवह्नियोजितं ॥ गृह्यकंदर्पदेवेशप्रीतोभवसमाहितः ॥ तदानींतूर्यादिघोषःकर्तव्यः ॥ ततोदह्यमा
नेत्रिपुरेप्रदक्षिणात्रयंकुर्यात् ॥ ततआचार्यसंपूज्यकंदर्पमूर्तिंदत्वागांचदत्वाद्विजेभ्योदक्षिणांदत्वाबंदिजनान्तोषयेत् ॥ ॥
इतित्रिपुरविधिः ॥ ॥अथव्यासपूजनं ॥ पाद्मे ॥ आषाढ्यांकार्तिक्यांवाकार्यं ॥ तिथ्यादिसंकीर्त्यममेहजन्मनिजन्मांतरे
वाचतुर्दशविद्याधिगमसिद्धिद्वाराश्रीपरमेश्वरप्रीत्यर्थंव्यासपूजांकरिष्यइतिसंकल्प्य ॥ गणेशपूजादिविधायदेवालयेमठेवा-
पीठमध्यभागेनारायणस्वरूपिणंव्यासंपूर्वादिषुपैलं ॥ वैशंपायनंजैमिनिंसुमंतुंपुरतःशुकंपरितःसप्तऋषीन् गुरुंपरमगुरुंपरमेष्ठि
गुरुंपरात्परगुरुंचसंपूज्यानंतंकूर्मंपृथ्वींपंचोपचारैःसंपूज्यततोयतीन्कौपीनाच्छादनादिनाप्रपूज्यद्विजेभ्योदक्षिणांदत्वाआ-
शिषोगृहीत्वानमेत् ॥ ॥इतिश्रीम॰ व्रतोद्यापनकौमुद्यांकार्तिकादिमासस्नानोद्यापनध्वजारोपणत्रिपुरदीपनव्यासपूज

नविधानानिसमाप्तानि॥ ॥अथअश्वत्थोद्यापनं॥ तदुक्तंशौनकीये॥ स्थापनादष्टमेवर्षेद्वादशैकादशेपिवा॥उत्तराय
णेगुरुशुक्रोदयेमाघफाल्गुनचैत्रवैशाखेषुशुक्लपक्षेशुभेनक्षत्रवारतिथिलग्नके॥स्कंधपर्णांकुरान्वितेविद्युताद्दवाग्निनावा
नभिहितेअश्वत्थउद्यापनंकुर्यात्॥तत्रादौकनककुंडलेकनकसूत्रेकनकमौंजीहोमद्रव्याणिसर्वसंभारान् यथासंभवंसंभृत्यअ
श्वत्थस्यचतुरस्रांवेदिकांविधायाश्वत्थमूलेवर्तुलंचतुरस्रंवाऽलवालंकृत्वातत्रतुलसीप्लक्षशाखांशमींचरोपयित्वाऽश्वत्थवे
दिकायांचतुरस्रंसमंतात्चतुर्द्वारंचतुर्हस्तंअधिकंवामंडपंअश्वत्थात्पूर्वेपश्चिमेउत्तरेवोक्तलक्षणंमंडपंअन्यंवाकृत्वास्वगृहेज्यो
तिर्विदादिष्टेमुहूर्त्तेप्रधानसंकल्पंकुर्यात्॥तद्यथा॥ तिथ्यादिसंकीर्त्यआत्मनोऽखिलपापक्षयाभीष्टसिद्धिपूर्वकआत्मना
सहैकविंशतिपुरुषानुद्धर्त्तुकामःश्रीपरमेश्वरप्रीत्यर्थमश्वत्थोद्यापनंतथाऽश्वत्थस्याभीष्टसिद्धिदातृत्वार्थंतदुद्यापनंचक
रिष्ये॥तदंगविहितंगणेशपूजनंपुण्याहवाचनंमातृकापूजनंनांदीश्राद्धमाचार्यादिवरणंचकरिष्ये॥इतिसंकल्प्य॥स्वगृह्यवि
धिनातानिकृत्वाचार्यादीन्वृणुयात्॥ अस्मिन्कर्मणिआचार्यत्वामहंवृणे वृतोऽस्मिइतिवदेत्॥ एवंब्रह्माणंसदस्यंउपद्रष्टारं

वृत्वासर्वान्मधुपर्कादिनासंपूज्यप्रार्थयेत्॥ अस्ययागस्यनिष्पत्तौभवंतोभ्यर्थितामया॥ सुप्रसन्नैश्चकर्त्तव्यंकर्मेदंविधिपूर्वकं॥
ततःस्वगृहेएवग्रहमखादिविधाय ततःसर्त्विक्सपत्नीकोयजमानःसंपूर्णकलशहस्तःभद्रंकर्णेभिरितिमंत्रेणमंगलतूर्यघोषेण
सहाश्वत्थमा दक्षिणयेनमंडपपश्चिमद्वारमागत्यतत्रधरांसंपूज्यमंडपंप्रविश्यकलशमश्वत्थसमीपेनिधायनिर्ऋतिवरुणयो
र्मध्येउपविशेत्॥ ततआचार्यःआचार्यकर्मकरिष्येइतिसंकल्प्य ॥शरीरशुद्ध्यर्थंभूतशुद्ध्यादिपौरुषजपंचकृत्वायदत्रसंस्थित
मितिसर्षपलाजान्विकीर्यसाधितपंचगव्येनकुशैःसर्वत्रप्रोक्षणं शुचीवोहव्येति आपोहिष्ठेतिउत्तरनारायणेनचकार्यं ततोदे
वाआयांतु यातुधानाअपयांतु विष्णोयजनंरक्षस्वेति स्वस्त्ययनंतार्क्ष्यमितिपठेत्॥ ततोयथोक्तमंडपकरणेमत्कृतरुद्रानुष्ठान
कौमुदीस्थप्रकारेणमंडपंपूजयेत्॥ साधारणमंडपेतुप्राग्द्वारे अमंत्रकंचूतपल्लवतोरणंदक्षिणेप्लक्षपल्लवतोरणंपश्चिमेवटपल्ल
वतोरणमुत्तरेअशोकपल्लवतोरणंबध्वातथैवप्रागादिद्वारचतुष्टयेश्वेतकृष्णाहरितरक्तपताकाः अश्वत्थशिरसिविचित्रध्वजं
चबध्वातथैवप्रागादिद्वारचतुष्टयेवेदादिक्रमेणद्वौद्वावेकमेकंवाजपार्थंब्राह्मणंवृणुयात्॥ ततआचार्योश्वत्थस्यहरिद्राते

लरोपणादिलौकिकंविधायअश्वत्थवेदिकायांईशान्यप्रदेशेसर्वतोभद्रंविरच्य ब्रह्मादिदेवतास्थापनंकरिष्यइतिसंकल्प्यउक्तप्र
कारेणसंस्थाप्यसंपूज्य तदुपरि अक्षतपुंजेमध्यप्रदेशेकृताग्न्युत्तारणसौवर्णप्रतिमायांइदंविष्णुरितिमंत्रेणवासुदेवंतद्वामतः
अधस्यायोषणेतिमंत्रेण रुक्मिणींतद्दक्षिणतः सत्यासत्यैतिमंत्रेणसत्यभामां ततःप्रक्षोदसाधायसेतिमंत्रेणसरस्वतीं
आतूनइंद्रेतिगणपतिंचावाह्य पौरुषेणसंपूज्य ततोऽश्वत्थपरितःपीठंसमंततोवा अष्टौकलशान्स्थापनप्रकारेणसंस्थाप्य
तत्रपूर्वकलशेशुद्धोदकमापोहिष्ठेतिनवर्चेनसूक्तेन द्वितीयेगंधोदकं आनोभद्राइतिदशर्चेन तृतीयेक्षीरोदकं स्वस्तिनोमिमी
तेतिपंचर्चेन चतुर्थेपंचगव्यं शन्नइंद्राग्नीइतिपंचदशर्चेन पंचमेहरिद्रोदकम् एतोन्विंद्रेतितृचेन षष्ठकलशेसर्वौ
षध्युदकं समुद्रज्येष्ठाइतिचतसृभिः सप्तमेकुशोदकं यादिव्याइति अष्टमेगंगोदकंप्रसुवआपइतिनवर्चेन उक्तप्रकारेणपू
र्णपात्रांतंकृत्वातत्रपूर्वादिक्रमेणइंद्रादीन् तत्तन्मंत्रैरावाह्यसंपूजयेत्॥ ततोश्वत्थंपुरुषसूक्तेनाथर्वशिरसाचसंशोध्यपंचामृता
भिषेकंचकृत्वाकाषायवस्त्रयुग्मेनसंवेष्ट्य ततःपूर्वादिदिक्षुचत्वारिस्थंडिलानिविधायतेषुहोमार्थंचतुरआचार्यान्वृत्वा

नेस्वगृह्यविधिनाग्नीनुस्थापयेयुः अत्रकेचन ईशानपूर्वयोर्मध्येग्रहहोमादिकर्तुं पंचममिच्छंति ॥ बहवः पूर्वकुंडे एवग्रह प्रधा-
नहोमादिकंकुर्वंति पूर्वमकृतग्रहयज्ञेईशान्यांवेदिकायांमत्कृतरुद्रानुष्ठानकौस्तुदी स्थप्रकारेणग्रहानावाह्यसंपूज्य अन्वाद
ध्यात् ॥ तत्रपूर्वकुंडेपूर्वकृतग्रहयज्ञेआदित्यादिनवग्रहानमुकसंख्यया ऽर्कादिसमिच्चर्वाज्यद्रव्यैः अधिदेवताप्रत्यधिदेवताश्च
अमुकसंख्ययातैरेवद्रव्यैः तथाआनोभद्रेतिमंत्रेणविश्वान्देवांश्चरुद्रव्येणाष्टोत्तरशतसंख्ययातथावस्तुदेवादिपीठदेवताः अश्व-
त्थसमिच्चर्वाज्यद्रव्यैः अष्टोत्तरसंख्ययाब्रह्मादिदेवताः इंद्रादिलोकपालांश्चैकैकयाज्याहुत्यायक्ष्ये ॥ पंचमकुंडपक्षेआदौतत्राग्नि
गणयनं तस्माच्चतुर्ष्वग्निप्रणयनंतत्रग्रहहोमः ॥ वास्तुदेवादीनांहोमोब्रह्मादीनांच ॥ पूर्वकुंडेविश्वेदेवानांलोकपालानांचहोमः
अथदक्षिणकुंडेगणपतिंतिलाज्यद्रव्येण अष्टोत्तरशतसंख्ययायक्ष्ये ॥ पश्चिमेअष्टौलोकेशान् वास्तुंचशमीसमिद्भिः अष्टोत्त
रशतनाष्टाविंशतिसंख्ययावायक्ष्ये ॥ उत्तरेनारायणंपौरुषेणयाजुःप्रत्यृचंआज्यद्रव्येणाष्टोत्तरशतसंख्ययायक्ष्ये ॥ एवंतत्तन्मंत्रैर्हो
मंसंपाद्यस्विष्टकृदादिबल्यंतंकृत्वाधिवसेत् ॥ पुराणादिनारात्रिंनिनयेत् ॥ केचनकाषायवस्त्रदानांतंकृत्वापरेद्युरेवहोमादिक

मिछंति ॥ प्रातःपीठदेवताःसंपूज्यअष्टकलशदेवताविसृज्यअष्टभिर्ब्राह्मणैस्तान्ग्राहयित्वा आचार्यःपवमानःस्रुवर्जनइत्य
नुवाकेनाश्वत्थंत्रिःपरिषिच्यकिंचिदवशिष्टोदकान्कलशान्पूर्वस्थानेषुस्थापयेत् ततोयजमानआचार्योवाऽश्वत्थपश्चिमेस्थंडि
लेसंस्कारहोमंकुर्यात् ॥ तद्यथा ॥ अश्वत्थस्यपुंसवनादिसमावर्तनांतान्संस्कारान्व्याहृतिद्वाराकरिष्ये इतिसंकल्प्य ॥ अग्निंप
वमानंप्रतिष्ठाप्यान्वादध्यात् ॥ अत्रप्रधानं ॥ अग्निंवायुंसूर्यंप्रजापतिंआज्यद्रव्येणप्रतिसंस्कारंचतुःचतुःसंख्याकाहुतिभिर्य-
क्ष्ये ॥ प्रतिसंस्कारहोमांतेवनस्पतेशतवल्शोइतिमंत्रेणअश्वत्थंस्पृशेत् ॥ एवमुपनयनपर्यंतंकृत्वायजमानाश्वत्थांतरालेप
टंधृत्वासुमुहूर्तेमंगलाष्टकपाठपुरःसरंतदेवलग्नमितिपठितेअंतःपटंनिःसार्यध्रुवसूक्तंपठित्वायेयज्ञेनेतिवर्गपंचकंशारवां
तरस्थमंत्रांश्चपठित्वाकौपीनंयज्ञोपवीतंकनकमयींदर्भमयींवामेखलांदंडंचतत्तन्मंत्रैर्दत्वासप्रणवांसव्याहृतिकांसशिरस्कां
गायत्रींउपदेशवत्पठेत् ॥ ॥इत्युपनयनं॥ ॥ ततोमहानाम्न्यादिसमावर्तनांतंकृत्वाकनककुंडलेऽलंकारांश्चदत्वाआयु
ष्यंवर्चस्यमितिपठित्वामौंजीविसर्जनांतंकृत्वाममाग्नेइतिसूक्तंपठेत् ततःस्विष्टकृदादिहोमशेषंसमापयेत् ॥ अथविवाहः ॥

तत्रादौ ऽश्वत्थालवालेशतकुंभमितंशुद्धजलंक्षिप्त्वादुग्धमधुघृतकुंभैश्चसिक्त्वावस्त्रयुग्मेनअश्वत्थतुलस्यादिशाखावेष्टयित्वा
तुलस्याः कंचुकीवस्त्रंकंठभूषणंमौक्तिकंकर्णपादभूषणानिचदत्वाअश्वत्थस्यविवाहविधिंकरिष्यइतिसंकल्प्य ॥पूर्वसंस्कार-
होमस्थंडिलोत्तरप्रदेशेस्थंडिलंनिर्माययोजकनामानमग्निंप्रतिष्ठाप्यअन्वादध्यात् ॥ अत्रप्रधानं ॥ ब्रह्माणंद्वासुपर्णाइतिमं
त्रेणाष्टोत्तरशतसंख्ययातिलाज्यद्रव्येणतथामहाव्याहृतिभिःतिलाज्यद्रव्येणाष्टोत्तरशतसंख्ययायक्ष्ये ॥महाव्याहृतयस्तु
भूरग्नयेचपृथिव्यैचमहतेचस्वाहा ॥भुवोवायवेचांतरिक्षायचमहतेचस्वाहा ॥स्वरादित्यायचदिवेचमहतेचस्वाहा ॥
भूर्भुवःस्वश्चंद्रमसेचनक्षत्रेभ्यश्चदिग्भ्यश्चमहतेचस्वाहा ॥एवंहोमंकृत्वातुलस्यश्वत्थयोः चतुरः शाखामयान्हस्तान्गृभ्णा
मीतिमंत्रेणयोजयेत् ॥ततः स्विष्टकृदादिहोमशेषंसमाप्य ततो ऽश्वत्थंपुरुषसूक्तेनषोडशोपचारैःसंपूज्यअश्वत्थंतुलसीं
चप्रार्थयेत् ॥ अश्वत्थत्वंजगन्नाथः पुरादेवैर्विनिर्मितः ॥पापात्संत्राहिनोदेवपुण्यंदेहिमहाफलं ॥ क्षीरोदधिसमुद्भूतेतुलसी
हरिवल्लभे ॥अश्वत्थोद्यापनंपुण्यंमह्यंदेहिश्रियेनमः ॥ततः आचार्यःक्षेत्रपालबलिंदत्वासर्वेआचार्याःस्वस्वकुंडेपूर्णाहुतिं

हुत्वाकर्मशेषंसमापयेयुः॥ ततोयजमानः पीठपूजांविधायकृतस्याश्वत्थोद्यापनस्यसांगतासिद्धयेआचार्यादिभ्योदक्षिणा-
प्रदानमहंकरिष्ये॥ पूजापूर्वकंदक्षिणांदत्वाततआचार्यादयः पूर्वस्थापिताष्टकलशोदकेनदूर्वापल्लवैःसपत्नीकंयजमानमभि
षिंचेयुः तत्रमंत्राः आनोभद्रेतिदशर्चंसूक्तं अस्यवामस्येतिद्विपंचाशदृचंसूक्तं मुंचामित्वेतिपंचर्चंसूक्तं समुद्रज्येष्ठाइ
त्यादयः सुरास्त्वामभिषिंचंतुइत्याद्याः एवमभिषिक्तोयजमानः तिलकादिधृत्वाअग्निंपीठदेवतांश्चसंपूज्य उत्तिष्ठब्रह्मण
स्पतउत्थाप्यसोपस्करंपीठमाचार्यायदत्वा संपूर्णतासिद्धयगांचदत्वामंडपंसदस्यायआचार्यायवादत्वाभूयसींचदत्वा
कर्मेश्वरार्पणंकृत्वाशताधिकान्ब्राह्मणान्संभोज्यआशिषोगृहीत्वाऽश्वत्थोद्यापनसंपूर्णतांवाचयित्वाइष्टजनैःसहभुंजीत
एवंयःकुरुतेतस्यवर्धतेश्रियमायुषं॥ कुलकोटीःसमुद्धृत्यविष्णुलोकेमहीयते॥ ॥इतिशौनकीयेऽश्वत्थोद्यापनं॥ ॥
अथवटोद्यापनं भविष्यस्कंधयोः॥ ॥उदगयनेसुमुहूर्तेस्थिरलग्नेचंद्रतारकानुकूल्येरम्यप्रदेशेनाभिमात्रगर्तेगृहाद्वैप्रतिष्ठे
तिमंत्रेणवटपादपरोपणंकार्यं॥ तद्वदेवसर्वपादपरोपणं॥ रोपणादष्टमेवर्षेद्वादशेवाशाखापत्रांतरितेउदगयनादिशुभेकाले

उद्यापनंकुर्यात्॥ वटस्यपरितश्चतुर्हस्तांदृढांवेदिकांकृत्वावटमूलेरम्यंचतुरस्रंवर्तुलंवा आलवालंकृत्वातत्रकांडात्कांडादिति
दूर्वारोपयेत्॥ वटपरितश्चतुर्हस्तंपंचहस्तंवासुदृढंचतुर्द्वारंमंडपंकुर्यात्॥ सामर्थ्येसतिवटात्पूर्वेपश्चिमेउत्तरेवायथोक्तप्रकारे-
णहवनार्थंनवपंचचतुःकुंडाद्युपेतंमंडपंकुर्यात्॥ असामर्थ्येतुवटवेदिकायामेवतत्रप्रागादिद्वारेचतुष्टयेआम्रोदुंबरप्लक्षाश्वत्थो
कपल्लवकृतानिचत्वारितोरणानि॥ तथाद्वारचतुष्टयेश्वेतकृष्णाहरितपीतवर्णाःचत्वारोध्वजाःपताकाश्च॥ वटशिरसिसर्ववं
र्णोध्वजःकार्यः एवंसंभृतसर्वसंभारोयजमानोज्योतिर्विदादिष्टेशुभेमुहूर्त्तेप्रधानसंकल्पंकुर्यात्॥ तद्यथा॥ तिथ्यादिसंकीर्त्य
आत्मनःसकलपापक्षयकुलकोटिसमुद्धरणऐहिकामुष्मिकनिरवधिसुखप्राप्तिपूर्वकब्रह्मपदप्राप्तिकामोवटोद्यापनंतथाभीष्ट
दातृत्वसिद्ध्यर्थंसर्वप्राणिसुखनिवासार्थंचवटसंस्कारंचकरिष्ये इतिसंकल्प्य तदंगविहितंगणपतिपूजनंपुण्याहवाचनं
मातृकापूजनंनांदीश्राद्धमाचार्यादिवरणंकरिष्ये स्वगृह्यविधिनातानि कृत्वाऽचार्यादीन्वृणुयात्॥ अस्मिन्कर्मणिआचा
र्यंत्वामहंवृणे॥ वृतोऽस्मीतिवदेत्॥ एवंब्रह्माणंसदस्यंउपद्रष्टारंचवृत्वामधुपर्कादिनासंपूज्यप्रार्थयेत्॥ अस्ययागस्यनिष्प

त्येइति ततःसऋत्विग्यजमानःपूर्णकलशहस्तःमंगलवाद्यतूर्यघोषेणसहशाकुनसूक्तंपठन्वटमंडपप्रादक्षिण्येनपश्चिमद्वार
मागत्यतत्रभूमिर्भूम्नाद्यौरितिमंत्रेणधरांसंपूज्यअर्घ्यंदत्वाप्रविश्यवटसमीपेकलशंनिधायवरुणानिर्ऋतिमध्येउपविशेत्॥
ततआचार्यःआचार्यकर्मकरिष्ये॥ भूतशुद्ध्यादिविधायमंडपांतःगौरसर्षपलाजान्॥यदत्रसंस्थितमितिविकीर्यसाधित
पंचगव्येनकुशैःआपोहिष्ठाइत्यादिमंत्रैःसर्वत्रप्रोक्षणंकृत्वादेवाआयांतु यातुधानाअपयांतुविष्णोदेवयजनंरक्षस्वततः
स्वस्त्ययनंतार्क्ष्यमितिपठेत्॥यथोक्तमंडपेउक्ततोरणपताकाध्वजान्बध्वाशांतिसूक्तजपार्थंवेदादिक्रमेणद्वावेकंवाब्राह्मणं
प्रागादिक्रमेणप्रतिद्वारंवृणुयात्॥ततआचार्योवटपश्चिमेचतुरस्त्रांवेदिकांनिर्माययतत्रसर्वतोभद्रेउक्तप्रकारेणब्रह्मादिदेवता
आवाह्यतदुपरिअक्षतपुंजेकलशत्रयंप्रतिष्ठाप्यएकंवातत्रमध्यमकुंभेब्रह्मजज्ञानमितिब्रह्माणं तद्दक्षिणे वषट्तेविष्णुरि-
तिविष्णुं॥उत्तरेत्र्यंबकमितिरुद्रं॥आग्नेयादिकोणेषु गणानांत्वेतिगणपतिं॥जातवेदसमितिदुर्गां जज्ञानमितिमातृः॥
क्षेत्रस्यपतेइतिक्षेत्रपालं॥ततःपरितोलोकेशान्तत्तन्मंत्रैरावाह्यसंपूज्यवेदीपरितोष्टौकलशान्स्थापनप्रकारेणसंस्थाप्य

तत्रपूर्वादिकलशेषुपंचगव्यंसप्तमृदःपंचपल्लवान्चंदनंपंचरत्नानिक्षीरंसर्वौषध्योगंगोदकंएवंक्षिप्त्वाशुद्धजलेनापूर्यपूर्णपा
त्रंनिधायतेषुइंद्रादीनावाह्यसंपूजयेत् ततोहरिद्रातैलरोपणादिवटस्यकृत्वावस्त्रेणावेष्टयेत्॥ ॥इत्यधिवासनं॥ ॥
परेद्युःप्रातर्नित्यकर्मनिर्वर्त्यपीठदेवताःसंपूज्यप्रागादिद्वारचतुष्टयेचतुरःकुंभान्संस्थाप्यतेषुउदकंपंचरत्नपल्लवादिचनिधा
यइंद्रयमवरुणसोमान्॥तत्तन्मंत्रैरावाह्यपूज्यचतुर्द्वारेषुचतुर्वेदविदोद्विजाःशांतिसूक्तानिपठेयुः॥ततईशान्यांकुंडेस्थंडिलेवा
अग्निंप्रतिष्ठाप्यतदुत्तरेवेदिकायामुक्तप्रकारेणग्रहानावाह्यसंपूज्यतदीशान्यांकलशंप्रतिष्ठाप्यजपार्थंब्राह्मणंवृणुयात्॥
ततःप्रागाद्याचार्याश्चत्वारःस्वस्वकुंडेस्वगृह्यविधिनाआचार्यकुंडात्श्रोत्रियागाराद्वा अग्नीन्प्रणीयध्यायेयुःकुंडचतुष्टयपक्षे
प्राक्कुंडादग्निप्रणयनंतत्रैवमुख्यहोमः॥ अथान्वाधानं॥ तत्रेशानकुंडेब्रह्मविष्णुरुद्रान्घृताक्तदूर्वाज्यद्रव्येणाष्टोत्त
रशतमिताहुतिभिर्यक्ष्ये॥इंद्राद्यष्टौलोकपालान्पलाशसमिच्चर्वाज्यद्रव्यैःअष्टाविंशतिसंख्ययायक्ष्ये दक्षिणेगणपतिंदुर्गांस
प्तमातॄःक्षेत्रपालंघृताक्ततिलद्रव्येणाष्टाविंशत्याहुतिभिर्यक्ष्ये पश्चिमेसाधिप्रत्यधिदेवतानादित्यादिनवग्रहानर्कादिसमिच्चर्वा

ज्यतिलव्रीहिद्रव्यैः अष्टाविंशतिसंख्याकाहुतिभिर्यक्ष्ये उत्तरेसोमंसोमोधेनुमितिमंत्रेणघृताक्तचरु पुक्षसमिद्द्रव्येण अष्टोत्तरश
तमिताहुतिभिः ब्रह्मादिदेवताश्चैकैकयाज्याहुत्यायक्ष्ये एवंतत्तन्मंत्रैः होमंसंपाद्य ततः आचार्योवटस्यहरिद्रातैलादिदत्वापंचो
पचारैः संपूज्य पूर्वस्थापिताष्टकलशान्ब्राह्मणान्ग्राहयित्वाच आपोहिष्ठा॰ समुद्रज्येष्ठा॰ इमाआपः॰ एतोन्विंद्रमितिप्रत्येकं
जपन् वटस्याभिषेकंकुर्यात् ॥ ततः आचार्यः प्रतीच्यांहोमसंस्कारार्थंस्थंडिलंनिर्मायसंकल्पयेत् ॥ वटस्यपुंसवनादिविवाहांता
न्संस्कारान् व्याहृतिद्वाराकरिष्ये अग्निंप्रतिष्ठाप्यअन्वादध्यात् ॥ अत्रप्रधानं ॥ अग्निंवायुंसूर्यंप्रजापतिं आज्यद्रव्येणप्रतिसं
स्कारंचतुःसंख्याहुतिभिर्यक्ष्ये ॥ प्रतिसंस्कारंहोमांतेवनस्पतेशतवल्शाइतिमंत्रेणवटंस्पृशेत् ॥ एवमुपनयनपर्यंतंहुत्वा य
जमानवटांतरालेपटंधृत्वाक्षसुहूर्तेतदेवलग्नमितिपठितेअंतःपटंनिःसार्य ध्रुवसूक्तंयेयज्ञेनेतिपठित्वा कौपीनंयज्ञोपवीतंमेख
लांदंडंचतत्तन्मंत्रैर्दत्वाउपदेशवद्गायत्रींश्रावयित्वानमेत् इत्युपनयनं ततोमहानाम्न्यादिसमावर्तनांतंकर्मकृत्वाः
लंकारान्दत्वाऽयुष्यंवर्चस्यमितिपठित्वामौंजींविसर्जयेत् ॥ ततोवटंदूर्वांचदुग्धादिनासिक्त्वातंदूर्वांवस्त्रयुग्मेनसंवे

च्छवस्त्रं कंचुकीमाभरणादिदत्वापूर्ववत् हुत्वागृह्णामीतिमंत्रेण वटदूर्वयोः पल्लवमयान् हस्तान् योजयेत् ततः संस्कारसंबंधि स्विष्टकृदादिहोमशेषं समाप्य वटं पुरुषसूक्तेन संपूज्य प्रार्थयेत्॥ आदितो ब्रह्मरूपाय मध्यतो विष्णुरूपिणे॥ अग्रतो रुद्ररूपाय वटवृक्षाय ते नमः॥ अकारमूलरूपाय उकारस्कंधशाखिने॥ मकारफलपुष्पाय वटवृक्षाय ते नमः॥ तत आचार्याः स्वस्व कुंडे स्विष्टकृदादि हुत्वा बलिं पूर्णाहुतिं च हुत्वा यजमानो वटोद्यापनसांगतासिद्ध्यर्थे दक्षिणां गां च दास्ये इति संकल्प्य क्रमेण दत्वा ततः ऋत्विजः कलशोदकैर्यजमानं समुद्रज्येष्ठा इत्यादि मंत्रैरभिषिंच्य कर्मशेषं समापयेयुः ततो यजमानः पीठदेवताः संपूज्य उत्तिष्ठ ब्रह्मणस्पत इति उत्थाप्य यांतु देवगणाः सर्वे इति विसृज्य पीठादि आचार्याय दत्वा मंडपं सदस्याय दत्वा भूयसीं दत्वा शताधिकान् ब्राह्मणान् भोजयिष्ये सदन्नेन संभोज्य आशिषो गृहीत्वा वटोद्यापनपूर्णतां वाचयित्वा इष्टजनैः सह भुंजीत॥ ॥ ॥ ॥ इत्यश्वत्थवटोद्यापने॥ इति श्रीमच्चित्तपावनकुलाब्धिसंभववयारे इत्युपनामक बल्लाळसूरिसूनुशंकररविरचिता व्रतोद्यापनकौमुदी समाप्ता॥ ॥ ॥ मुंबईत ज्ञानदर्पणछापखान्यांत छापिलें॥

समाप्त

इति व्रतोद्यापनकौमुदी समाप्तः

